सततमुक्तिप्रदं, वमितसर्वापदं, प्रमितसिद्धास्पदं, ज्ञानगम्यम् ।
अर्हदरनाथकं, परदरोच्छेदकं, शिवसुखोत्पादकं, नौमिनित्यम् ।। कि. ।।

---

## श्रीमल्लिनाथस्तवनम् ।। १९ ।।

( तोटकछन्दः )

श्रुततत्त्वसुतत्त्वधरंप्रवरं, वरदंसितदन्तविभाविभवम् ।
परमोत्तममल्लिजिनंशिवदं, दमितेन्द्रियवारमजंजपत ।।१।।
नृपकुम्भसमुद्भवसिद्धभवं, भववारिविशोषककुम्भभवम् ।
जनताप्रणतक्रमतामरसं, वरमल्लिजिनेशमहंकलये ।। २ ।।
निरुपाधिकसंपदतिप्रमदं, प्रभयाविलसन्तमनुत्तमया ।
तमसाविकलंमुकलंमृदुलं, जगदीशमलंस्मरतेष्टबलम् ।।३।।
अजराशिभृतंनिभृतंक्षमया, परिशोभितभीतिविवर्जितनुम् ।
परिखण्डितमानसमानरतिं,नमताखिलभव्यजनाःसुजिनम् ।।
सततंभवतारकमल्लिविभो, जगतामशिवंहरसापहर ।
तवपादसरोजरतिर्भवतु, भवतेतिविधेयमनन्तमयि ।। ५ ।।

---

## श्रीमुनिसुव्रतस्तवनम् ।। २० ।।

( द्रुतविलम्बितवृत्तम् )

विकचतामरसाभशुभाननो, विदलिताखिललोकतमोभरः ।
विषयवासनयोद्ग्रथितात्मनां, हतधियांभवपाशविमोचकः ।।१।।

निजपवित्रचरित्रमनोगति-र्मतिमतांवरराजिभिराश्रितः ।
विमलनीलवरद्युतिराजित-उचितवर्त्मममहाव्रतदेशकः ॥ २ ॥
गतसंशयमेवसदास्थितो-निजपरात्मविभेदविभेदकः ।
सुरपतिप्रकरप्रथितोत्तम-शुभयशःप्रकरःप्रथिताशयः ॥ ३ ॥
मकरराशियुतः शुभराशिमा-न्नतजनार्त्तिहरोमहसोर्जितः ।
वरगुणोदितदीव्यवपुर्धरः, सुभगलक्षणलक्षितपत्कजः ॥४॥
विततनित्यपदार्थनिरूपकः, शमितदुष्प्रथिताऽन्यनिरूपणः ।
शिवसमृद्धिवितानविवर्द्धको-विजयतांमुनिसुव्रततीर्थकृत् ॥५॥

---

## श्रीनमिनाथस्तवनम् ॥ २१ ॥

( पञ्चचामरछन्दः )

नमज्जगज्जनव्रजं सुरेन्द्रसेवितक्रमं,
क्रमाङ्कलीनखाञ्चिपातिभासिताम्बरालयम् ।
जगत्पतेनमीशसत्यरूपसर्वदास्थितं,
भवन्तमेव संस्तुवेमनःसरोरुहेमुदा ॥ १ ॥
प्रकाशयत्यशेषलोकभव्यमानसाम्बुजा-
न्यहोविचित्रधामराशिरक्षतस्त्वदुत्थितः ।
समानतांनुतावकींविभोभजन्तिनश्वर-
प्रभाधरोष्णरश्मिशीतरोचिरादयःकथम् ॥ २ ॥

अनुत्तमोर्द्धसिद्धिसद्ममूर्धकल्पितस्थितिं,
चराचरादिसर्वदर्शिनंविकस्वरप्रभम् ।
विमानमाननीयतत्त्ववादवादिनंजिनं,
नमीश्वरंभजध्वमुच्चधामलिप्सयाजनाः ॥ ३ ॥
विभातियत्पदाम्बुजेप्रफुल्लक्रौंञ्चलाञ्छनं,
तमद्वितीयबोधनप्रकाशिनंवराशिषम् ।
शरच्छशाङ्कदीप्तिहारिभूरिभूतिमण्डलं,
भजन्तुभानुकानराभवाब्धितारकंजिनम् ॥ ४ ॥
अरिष्टकष्टकारिकर्मवारिशर्मदायकं,
विपत्तिपत्तनक्षयञ्चलद्धनञ्जयार्चिषम् ।
प्रभिन्नमानभूपतिंपतिंत्रिलोकवासिनां,
नमामिमोक्षदंप्रभुंनमीश्वरंकृपापरम् ॥ ५ ॥

---

## श्रीनेमिनाथस्तवनम् ॥ २२ ॥

( उपजातिवृत्तम् )

यःशुद्धबुध्यात्मसमंविदित्वा, निःशेषभूतादिगणंसुरक्ष्यम् ।
सन्मानितंसत्पुरुषैर्वरेण्यं, ममत्त्वमङ्गीकुरुतेस्मसद्यः ॥ १ ॥
यश्चातिसंक्लिष्टपशुव्रजाना-मार्त्तध्वनिंश्रोत्रपथंविनीय ।
न्यवीवृतत्सारथिनास्वकीयं, रथंस्वबन्धूननमन्यविद्वान ॥ २ ॥

कृतारिषड्वर्गजयेनयेन, राजीमतींराजसुतांविहाय ।
शिवार्थिनासंजगृहेभवापहा, शुभावहादीव्यमुनीन्द्रलक्ष्मीः ॥३॥
शिवात्मजातं प्रशमाकरंतं, कन्याख्यराशिंदधतंविजिष्णुम् ।
विशिष्टमानन्दनिधानमेकं, नमीश्वरंनौमिभवाब्धिपोतम् ॥४॥
विजित्यकामंजितसर्वलोकं, सत्यस्वरूपेरमप्रमाणमीशम् ।
निसर्गसौन्दर्यविराजमानं, स्मरामितीर्थाधिपनेमिनाथम् ॥५॥

---

## श्रीपार्श्वनाथस्तवनम् ॥ २३ ॥

( पञ्चचामरछन्दः )

जगत्प्रकाम कामितप्रदानदक्षतायुतं,
निजस्वरूपभावितात्मतत्त्वसत्त्वसेवितम् ।
गतप्रमादसंगतिंश्रितप्रकृष्टसंगतिं,
भजध्वमक्षयप्रभंप्रभाविपार्श्वमीश्वरम् ॥ १ ॥
नृपाश्वसेननन्दनं समन्दरागतारकं,
निवारकंविपत्तिकारकैनसंसुमानसम् ।
सुसंपदाऽतिभूषितामृताशिपूजितक्रमं,
समन्ततोविशालचारुदेशनाकृताऽभयम् ॥ २ ॥
व्यधत्तभक्तिवत्सलाङ्गनाङ्गनक्षमानपि,
क्षणाद्दयार्द्रचेतसःसुभद्रचिन्मयात्मकः ।

तुल्याऽभिधानराशिमादधानउत्तमोत्तमः,
प्रसन्नसन्नपापराशिरिष्टभूतिभूषितः ॥ ३ ॥
प्रभूतभव्यसंपदांसुधामधामनिस्वके,
निजश्रियाविराजितःस्थितःसुखप्रदःसताम् ।
समानमोहलोभरोषवार्दलौघमारुतो-
विजायतांसपार्श्वनाथइष्टसिद्धिसाधकः ॥ ४ ॥
भवन्तुपार्श्वतीर्थकृन्नखप्रभाप्रभाकरः,
सुभव्यभव्यमानसाम्बुजालिबोधकारकः ।
प्रकामशाश्वतप्रभानिधियदीयसुण्णगु-
र्निरीक्ष्यतत्पदेच्छयाभ्रमन्निवेतिलक्ष्यते ॥ ५ ॥

---

## श्रीवीरजिनस्तवनम् ॥ २४ ॥

( शार्दूलविक्रीडितम् )

यद्भक्तिप्रसरत्प्रभावकलितां लीलामखण्डश्रियां,
सद्भाग्यैकवशंवदांसुरगवी-माराधयन्तिक्षणात् ।
तत्सत्याश्रितवाक् सुधारसमयो-विश्वागमार्थोत्रयः,
श्रेयःसंजननोभवत्वतितरां, लोकत्रयस्थायिनाम् ॥१॥
श्रेयःसन्ततिवर्द्धकभवभय-क्षोभप्रदंभास्वरं,
दुर्वारेन्द्रियवैरिवारविजयि-क्षीरोदकन्याश्रितम ।

यत्पादाम्बुजयुग्मकं विलसति, क्षेमङ्करंशान्तिदं,
सोऽयंवृद्धिविधायकोविजयतां, श्रीवर्द्धमानप्रभुः ॥२॥
क्षेमंसन्तनुतेनिकृन्ततिमति-क्षोभंचयद्दर्शनं,
संसाराम्बुनिधिंकरोतिसुतरं, सौभाग्यरत्नाकरः।
सद्विद्यांवशवर्त्तिनींजनयति, द्वेषप्रपञ्चान्तकं,
भूयात्सर्वसुखप्रदस्त्रिजगतां, सिद्धार्थभूपाङ्गजः ॥३॥
यन्मूर्तीन्दुकलाः सुभव्यजलधी-न्कल्लोलितान्कुर्वते,
मिथ्यात्वोज्ञानितांतमस्ततिमिरं, संप्रापयन्तिक्षयम्।
सौजन्याऽभयभावनौषधिगणा-न्संवर्द्धयन्तेमुदा,
तंदेवेन्द्रसमर्चिताङ्घ्रिकमलं, वीरप्रभुंनौम्यहम् ॥४॥
आपद्वारिधिमुत्तरन्तिभयदं, पादारविन्दश्रिता-
दीव्यानभोगगणान्व्रजन्तिनितरां, संपूजनीयाःसताम्।
कन्याराशिगतस्य, यस्यनिहता-नङ्गप्रचारोजिनः,
सोऽत्यन्तंवितनोतुमङ्गलकलां, श्रीत्रैशलेयःसदा ॥५॥

चतुर्विंशतिजिनस्तुतिः संपूर्णा.



शास्त्रविशारद जैनाचार्य योगनिष्ठ श्रीमत्सद्गुरु श्री-
बुद्धिसागरसूरिचरणसरोजेभ्यो नमः ।

# श्री चतुर्विंशति जिनस्तुतिसंग्रहः

( तोटकवृत्तम् )

त्रिशलासुततीर्थकरंसुगुरुं, शुभबुद्धिनिधिंकमलासनिकाम् ।
हृदयस्थमहंप्रविधायजिन-स्तुतिसारमहंवितनोमिमुदा ॥१॥

## श्रीमदादिजिनस्तुतिः ॥ १ ॥

( शार्दूलविक्रीडितवृत्तम् )

संसारार्णवतारकक्षतमहा-कर्मावलीवेदन,
सद्भक्त्या प्रणतांघ्रिपद्मयुगल, श्रेयस्ततिं साधय ।
श्रीमन्नाभिनरेन्द्रनन्दन जना-नन्दप्रदानोत्तम
भक्तानामभयप्रदश्रुतमतां, सर्वापदांवारक ? ॥ १ ॥

सर्वेपान्तुजिनोत्तमात्ररुचः, सद्धर्मविस्तारिणो-
ध्वस्ताज्ञानतमोभराजनगणा-भिमानमायालवाः ।
यत्पादाम्बुजयोर्लुठन्तिसततं, स्वर्गौकसःसादराः,
सिद्धानन्दपदप्रियाःकृतधियो-मन्दारमालाश्रिताः ॥२॥
भव्या ? वस्तनुतां सुशान्तिमनिशं, पूज्यैर्यतीन्द्रैःकृतं,
दुर्लक्ष्यं दुर्वादिभिर्दलितदु-र्मोहारिवर्गोद्यमम् ।
अक्षोभ्यं कुमतैर्जनैः प्रवचनं, तत्त्वार्थराशिश्रितं,
निक्षेपागमसिद्धतत्त्वविमला-र्णोराशिमुद्योतकम् ॥३॥
पायाद्वःश्रुतदेवताश्रितवती, शुक्राम्बुजं निर्मलं,
सम्यक्तत्त्वविलासरक्तहृदया, विस्तारितानन्दका ।
यत्प्रेक्ष्याऽलसमानसास्थितवती, सद्भ्रामरीसन्ततिः,
सन्त्यज्याश्रमिताऽमरद्रुमसुमं, सौरम्यसंराजितम् ॥४॥

---

## श्रीमदजितनाथस्तुतिः ॥ २ ॥

( द्रुतविलम्बितवृत्तम् )

अजितनाथतवाङ्घ्रिसरोजकं, हृदयसद्मनिचारुविचिन्तये ।
स्वजननोत्सवइन्द्रगणस्तुतं, कनकभूधरसानुविराजितम् ॥१॥
जिनगणंविमदंस्तुतमानवाः, शमितसंसृतिभूतमहापदम् ।
अमरनाथगणाःस्तुतिमन्वहं, विदधतेऽस्यमहोत्सवधारिणः॥२

प्रदिशमेऽन्तिमधामनिवासकं, त्रिभुवनार्त्तिनिवारकनिर्मले ।
जिनमतश्रुत ? सर्वसुखास्पदे, विततमोक्षपथेष्टसहायद ? ॥३॥
सितगरुत्मदधिष्ठितविग्रहा, विशददीप्तिपविंदधतीश्वरी ।
वितरतुक्षतरुग्भुविमानसी, भवभयक्षयकारकशंसदा ॥४॥

---

## श्रीसंभवनाथस्तुतिः ॥ ३ ॥

( वसन्ततिलकावृत्तम् )

निर्भिन्नशत्रुभवभीतिविशेषशान्त,
संसारसागरमहाप्लवसंभवेश ? ।
मत्थंप्रदेहिशशिसोदरशर्मसत्रो-
लोकातिगंप्रथितसर्वजनप्रभाव ! ॥ १ ॥
अर्हत्कदम्बकतवप्रणतंवरेण्य-
लक्ष्मीःसदाश्रयतुमानवमानमद्भिः ।
देवाधिपैःस्तुतपदाम्बुजकामहीन,
निर्मानमोहमदमृत्युजराप्रभाव ॥ २ ॥
अर्हद्गणेनरचितंशुभशासनंवः,
शर्मावलींदिशतुसर्वनयानुसारम् ।
विभ्रत्परैरकलनीयमयानकेन,
त्रैलोक्यविश्रुतगुणेनविमानकेन ॥ ३ ॥

याशृङ्खलाभरणभूषितकान्तमूर्त्तिः,
सौवर्णवर्णविभवानमतामनिन्द्याम् ।
श्रीवज्रशृंखलयुतांश्रुतदेवतांद्राक्,
पद्माश्रितामममदमानवपूजनीयाम् ॥ ४ ॥

---

## श्रीमदभिनन्दनस्तुतिः ॥ ४ ॥

( द्रुतविलम्बितवृत्तम् )

त्वमभिनन्दन ? देवगणस्तुत, विदलयाऽशुभभावगणं मम ।
स्मरगजेन्द्रविदारणकेसरि-न्परिहतप्रमदागणनिर्भय ॥ १ ॥

जिनवरागतमोहभयाःसदा, ममतमोहरणायविभासकाः ।
जितमदाःप्रयतध्वमितामयाः,सकरुणाचरणस्थितिभासुराः॥२

जिनवरागमनोभवमायतं, प्रथितजन्मजराक्षयदुर्दशम् ।
मलघुतांनयनिर्मथितामय, प्रवरसारसनाथनयालय ? ॥ ३ ॥

सुधनुषाऽश्रितहस्तलतामरं, विशिखशंखयुजानमदेवताम् ।
विशदवर्णकलामिहरोहिणीं, सुरभियाततनुंविपुलर्द्धिकाम् ॥४

---

# श्रीसुमतिजिनस्तुतिः ॥ ५ ॥

( वसन्ततिलकावृत्तम् )

त्रायस्वसंसृतिदरात्सुमते ? जिनेश ?
त्वत्पादपद्मनिरतांजनतांजितारे ? ।
सिद्धान्तनायकगतालयहेमकान्ते,
भीताऽभयप्रदसुकान्तविशालमूर्त्ते ? ॥ १ ॥
राकेशकान्ततनवस्तनुतप्रशान्ति,
तीर्थाधिपाविमदनामदमानहीनाः ।
सन्मार्गयातजनताहितमादधानाः,
सद्दानिनोगतभयाऽभयदानदक्षाः ॥ २ ॥
भव्याः स्मरन्तुजिनराजमुखाम्बुजन्म-
जातंमतंमतिमतांहितजातदायि,
विस्तीर्णतत्त्वजलधिंपरमार्थबोधं,
संरोधकं परमतार्थनिरूपकाणाम् ॥ ३ ॥
कालीसुकान्तवदनारदनप्रभाभि-
र्नीलाम्बुवाहघनदेहविभाविताना
दूनाभयप्रदगदांदधतीविशालां,
कान्त्याविभूषितधराभुविरक्षतान्माम् ॥ ४ ॥

## श्रीपद्मप्रभजिनस्तुतिः ॥ ६ ॥

( वसन्ततिलकावृत्तम् )

पद्मप्रभोश्चरणपद्मयुगंप्रमोदं
दीर्घंददातुसततंमहतामुपास्यम् ।
वृत्तप्रमोदविभवंजगतिप्रकाम-
मुन्मुद्रिताऽमरसभंविगताऽऽमयस्य ॥ १ ॥
सामेमतिंवितरतुक्षितकर्मभूमि-
रर्हत्ततिःसुविदिताप्रथमामगाद्याम् ।
स्वर्गौकसांततिरजस्रविभासमाना
देदीप्यमानमणिरत्नविभावितानैः ॥ २ ॥
लोकाःश्रयन्तुजिनकीर्त्तितमागमार्थं
भ्रान्तिच्छिदंयमिजनाश्रयणीयमीड्यम् ।
संसारसागरमहाप्लवमाश्रितानां
धामाग्रिमंविहतपापदरंनयानाम् ॥ ३ ॥
गान्धारिवज्रमुसलेजयतस्त्वदीये
नीलाम्बुजावलिनिभेऽशुवितानभाज्ञी ।
येकीर्त्तिपुञ्जमनवद्यसुखं लभेते
स्वर्गावनीभुजगलोकविभासमानम् ॥ ४ ॥

## श्रीसुपार्श्वजिनस्तुतिः ॥ ७ ॥

( वसन्ततिलकावृत्तम् )

ये जन्तुजातमकरोत्प्रणतिप्रधानं
निर्वारिताऽतनुमनोजमदारिबाधः ।
तंमानव! स्मरविचिन्त्यनिजेसुपार्श्वं
चेतोऽम्बुजेपरहितोद्यतमानभावम् ॥ १ ॥
जैनेश्वरीततिरखण्डितबोधकामा
चित्तारविन्दमनिशंव्रजतुप्रसन्नम् ।
या नव्यवारिजगणेपदमादधाना
चक्रेविहारमनघाऽमदमानवानाम् ॥ २ ॥
संपादयच्छिवसुखंननुसंयतानां
जैनंमतंभवभयार्त्तिहरंमुदाऽरम् ।
श्रेयोर्थिनोनमतनम्रधियाप्रशस्तं
स्वर्गापवर्गवसतिंक्षणतोददानम् ॥ ३ ॥
संरक्षशर्मजननीभुविमानसीष्टा।न
पञ्चाननोपरिगताऽमरमाननीया ।
खड्गंरविप्रभमहोज्वलमादधना
माणिक्यमुत्तमविभञ्च कराब्जमध्ये ॥ ४ ॥

## श्रीचन्द्रप्रभस्तुतिः ॥ ८ ॥

( वसंततिलकावृत्तम् )

चन्द्रप्रभं नमत शारदचन्द्रकान्तं
कान्तानलं भवतमस्तृणपुञ्जदाहे ।
विद्वत्कदम्बकनतांघ्रिसरोजमीशं
भोमानवा ! विगतमानमनोजगर्वम् ॥ १ ॥

जीयात्कदम्बकमरोगमदं जिनानां-
सत्याकरं जयदजस्रविभाप्रकारम् ।
यद्धर्मचक्रमवहद्भुविभव्यहतो-
लब्धावतारमनिशं प्रबलप्रतापम् ॥ २ ॥

सिद्धान्तराशिरमलोहतयेऽहितानाम्-
मख्यापयज्जिनगणोयमनिन्दितात्मा ।
युष्माकमस्तु कमनीयविचारचारु-
देवेन्द्रवृन्दनुतपीतवचःसुधाकः ॥ ३ ॥

वज्राङ्कुशि ? प्रतपनीयविभेमयत्नं
त्राणे जगज्जनिमतां विशदं विधेहि ।
अध्याश्रिताशशधरोज्ज्वलभासिमत्ते
सौवर्णकान्तिरुचिरावयवाद्विपेन्द्रे ॥ ४ ॥

## श्रीसुविधिजिनस्तुतिः ॥ ९ ॥

( वसंततिलकावृत्तम् )

संपत्तिमाशुभवतांसुविधिर्विधेया-
योगीन्द्रसन्नतपदाम्बुजयुग्मइष्टाम् ।
नाकिव्रजाऽसुरनराधिपसेव्यमानः
स्वर्गापवर्गसुखसिद्धिरुचिप्रधानाः ? ॥ १ ॥
याऽशेषमानवगणायहितानिराजी
साराक्रियाऽवददलंसदयाजिनानाम् ।
मोदंददातुविपुलंममनिर्ममत्वा
पादारविन्दविलुठत्पुरुहूतराजिः ॥ २ ॥
दिश्याज्जिनेन्द्र ! तवकण्ठविनिर्गतामे
लोकोत्तरंशिवसुखंभुविभारतीन ? ।
भङ्गैर्नयैश्चरुचिरार्थपराऽतिशस्ताऽ-
ज्ञानान्धकारमखिलंप्रथितंक्षयन्ती ॥ ३ ॥
दिश्यात्तवाशुशिवदाज्वलनायुधाशं
स्वल्पोदरीगतदराऽभयदासिताभा ।
शस्तास्यकान्तिनिचयेर्नातिरस्कृतेन्दु-
र्मध्यंसमाश्रितवतीछ्वराळकस्य ॥ ४ ॥

## श्रीशीतलनाथस्तुतिः ॥ १० ॥

( वसन्ततिलकावृत्तम )

दीव्यंसुखंदिशतुशीतलतीर्थनाथः
शुद्धस्वरूपरमणः शिवसिद्धिधाम ।
यत्पादपद्मभजनेनदिवौकसोऽपि
भेजुर्निरामयसुखानिमहोज्ज्वलानि ॥ १ ॥
भव्याजनाः ? स्मरतवृन्दमरंजिनानां
निर्भिन्नजन्ममृतिमोहजरारतीशम् ।
पादारविन्दविनतोरुजनानवद्यं
निर्वृत्तिशर्महितदंशमितप्रकोपम् ॥ २ ॥
कल्पद्रुमोपममसारमतावभेदि
वाचांवितानमकलङ्कितमर्हदुक्तम् ।
श्रेयस्ततिंदिशतुदीव्यमहाप्रभावां
लोकत्रयप्रथितत्त्वगुणप्रभावम् ॥ ३ ॥
देव्यक्षताऽमरसमन्वितमानसीह
सान्द्राङ्गकान्तिनिचयाजनिताऽतिमोदा ।
त्रैलोक्यरक्षणपराजयताज्जगत्यां
श्रेष्ठायुधंकरतलेदधतीप्रसन्ना ॥ ४ ॥

## श्रीश्रेयांसजिनस्तुतिः ॥ ११ ॥

( वसन्ततिलकावृत्तम् )

यन्मानसं युवतयः कृतहावभावा-
नो जह्रुरुच्चतरगीतिकलातिदक्षाः ।
श्रेयांसमानमततं सुमनोर्चिताङ्घ्रिं
भिन्नाम्बुजायुधविकल्पमभेद्यबोधम् ॥ १ ॥
दीर्णश्रमा जिनततिर्नतिमादधद्भि-
र्देवासुरेन्द्रनरनाथगणैः स्तुताऽलम् ।
दिव्याभिरामयमुखानि पवित्रिताशा
संपन्नसर्वविभवा विगतामयाव: ॥ २ ॥
अर्हन्मतं मतिमतां रुचिरप्रभावं
कल्याणमादिशतु निर्गतदोषलेशम् ।
नैकार्थसन्नयविराजिततत्त्वराशि
वृत्रारिवारपरिपीतवचोऽमृतं द्राग् ॥ ३ ॥
वज्रं फलाक्षपटले च सुनादघण्टां
बिभ्रत्यजस्रमुदिता करवारिजातैः ।
अध्यासिता वररुचिर्गतशोकवारां
मर्त्याधिपं जनमताजयतात्सुकाली ॥ ४ ॥

## श्रीवासुपूज्यजिनस्तुतिः ॥ १२ ॥

( मन्दाक्रान्तावृत्तम् )

संपूज्यश्री-रहजिनाजिनाधीशितो-वासुपूज्य ?
नूत्नालानो-पमकरविभातोऽणभानूरुकान्ते ? ।
निर्मानत्वं, जगतिजनतां, पालयस्वाऽतिनम्रां-
कामक्लेशादवनदधतींभूरिदुःखं वरेण्य ? ॥ १ ॥
संपूतंय-च्चरणरजसां, मण्डलं देवराजे-
श्रीर्णाशोभां, शिरसिदधति-स्मातिशस्तप्रभावम् ।
कीर्त्तेः कान्त्या, ततिरतिवरा, निर्जयन्तींजिनानां
कर्मग्रन्थिं, प्रविकिरतुसा, युष्मदीयंगताघा ॥ २ ॥
हृद्यावाणी, तव जिनपते ?, नोहितानिप्रदेया-
न्नित्यंहेतु-ग्रथितहृदया, युक्तियुक्ताऽपदोपा ।
निष्पापाया, समदमनुजै-र्गीतकीर्तिप्रकाण्ड-
सद्योगाना-मतिशययुजां, भाजनंसंपदाढ्य ? ॥ ३ ॥
श्रीशान्तिस्त्वा-मवतुविदुषी, श्वेतपद्माधिरूढा
रक्षःक्षुद्र-ग्रहभवभया-च्छेदिनीश्वेतरोचिः ।
सन्नालीका, निजपरिकरो-द्भासिनीचारुवेशा
शिष्टैर्मान्या, जगदभिहितं, सर्वदाधारयन्ती ॥ ४ ॥

# श्रीविमलनाथस्तुतिः ॥ १३ ॥

( मन्दाक्रान्तावृत्तम )

निर्देष्टारं, विमलविमलं, तत्त्वराशिंजिनेशं
वीतक्षोभं, व्रतशमदयं, मानवानांहितानि ।
कुर्वन्तंतं, वयमभिमता-आनमामः सुभक्त्या
देवालिर्यं, नमनहृदयाद्दूरतोनैवयाति ॥ १ ॥
जैनीराजिः, परमसुखदा, दीर्णकामारिभीतिः
सत्वापन्ना, कुमतदलने, कर्मतापप्रहीणा ।
श्रेयः श्रेणिं, दिशतु भवतां, जन्ममृत्युश्रमाणां
स्वर्गस्थानां, प्रवरसभया, गीतसत्कीर्त्तिराशिः ॥२॥
भिन्नभ्रान्तिः, कलिमलहति, क्षोभयित्रीप्रकामं
निर्दोषाया, जिनवरमुखा-म्भोधिजातापवित्री ।
वाचामालि-र्गमनयहिता, नाकिलोकाऽतिपीता
संसारंसा, सुतरमनिशं, भक्तिभाजांकरोतु ॥ ३ ॥
सौम्याराबा, तनुभवकरी, रोहिणीभासुराभा
यातायानं, परमवनता, सौरभंवीतभीतिः ।
वेगाक्रान्तं, मनुजसभयाऽ-चापलाऽपापथाऽलं
निःसीमानं, प्रमदभवनौ, सादरं संतनातु ॥ ४ ॥

# श्रीमदनन्तनाथजिनस्तुतिः ॥ १४ ॥

( मन्दाक्रान्तावृत्तम )

निर्मानारे ? नतसुरसभा-राजिपादारविन्द
 क्षीणानङ्गऽ-प्रमितविभया, भ्राजमानाननश्रीः ।
धर्म्येचक्रे, जनहितकृते, स्थायुकाऽनन्तनाथ ?
 मोक्षाध्वानं, कुरुसुखगमं, देशनाऽशीतभासा ॥ १ ॥
मायातीत, क्षणदसदन, श्रेयसांनिर्मलानां
 पादद्वन्द्वं, जिनवरकद-म्बत्वदीयंमुदाऽरम् ।
दीव्याकारं, ममहृदिततं, श्यामलत्वंनिहन्तु
 देवेन्द्राणा-मभयसभया, स्तोत्रसारेणगीतम् ॥ २ ॥
सिद्ध्यारामं, मतमभिमतं, जैनराजंजनानां
 जेगीयन्तेऽ-मरगणसभा-सेवितोयंत्रिपारम् ।
तद्युष्माकं, भवभयहृतिं, दुर्निवारांविदध्या-
 च्चित्तप्रीति-प्रदमनुदिनं, भेदिताऽन्यानुयोगम् ॥ ३ ॥
उत्तुङ्गार्वा-श्रितततनुलता, काञ्चनाभाऽच्युताभे
 रक्षादक्षा, धृतधनुरसि-श्रमबाणौदधाना ।
हस्तैः शस्तै-स्त्वरितगतये, शर्मदिश्यादमेयं
 संसाराब्धौ, श्रमितवपुषां, तारणैकोच्चसत्त्वा ॥ ४ ॥

---

## श्रीधर्मजिनस्तुतिः ॥ १५ ॥

( मन्दाक्रान्तावृत्तम् )

शान्तक्लेशः, शरणमचलं, मानवानांसमानां
श्रीमद्धर्मो-जिनगणवरः, पूजितोनाकिवर्गैः ।
निष्कर्मारि-स्तवकरगतां, मोक्षलक्ष्मींविदध्या-
दुच्चैःकान्त्याऽखिलजनगताऽ-ज्ञानराशिप्रभेत्ता ॥१॥
दीर्णध्वान्तं, सुमतिसदनं, जैनराजंकदम्बं
दीप्त्याराज-च्चरणपदवीं, सारतारांवितन्वत् ।
भोगान्नागा-निव्रपरिहर-दूरतःशान्ततान्ति
क्षान्त्यैभूया-त्सततसुखद-क्षेमलक्ष्मीप्रियाणाम् ॥ २ ॥
पीयूषाशाऽ-सुरनरवरैः, प्रस्तुतंस्वालयस्थै-
रक्षोभंय-त्परमतपरै-रप्रमेयार्थभासत् ।
अर्हद्वृन्दै-र्मतमभिहितं, निर्मदानङ्गमानं
श्रेयोदिश्या-द्भुवनविदितं, मानवानांनतानाम् ॥ ३ ॥
प्रज्ञप्तिर्वो-नवकजवरा-भाविशालाक्षपद्मा
मायूरंयाऽ-वनांत्रिमलश्री-र्यानमारोहदिष्टम् ।
साविघ्नानां, हतिमतिबला-ऽयाचिताभक्तिभाजां
कुर्यात्कान्तो-त्तमगतिरयं, शक्तिराजच्छयाब्जा ॥४॥

---

## श्रीशान्तिनाथस्तुतिः ॥ १६ ॥

( स्रग्धरावृत्तम् )

राजन्त्योत्तप्तहेमो-ज्ज्वलवरविभयाऽ-कोपमानप्रचार ?
श्रीशान्तीशानतन्वा, जितकनकगिरे ? शान्तमुद्रांवहन्त्या ।
धीरोदारप्रभाव, क्रमवरवनजैः, सेव्ययानिर्जरेशैः
रक्षत्वत्पादरक्तं, वृतसुमतिवधो, मांजिनेन्द्रप्रपन्नम् ॥१॥
तेजीयासुर्जिनेशाः, सकलभुवनगां, संपदंधारयन्तः
कीर्त्यावीतारिभावा-मदमिपदपिये, नैवचक्रुर्विशोकाः ।
कुन्दप्रख्यत्विषाऽलं-कृतवरवपुषः, प्राप्तलोकैकराज्या-
उच्छिन्नानङ्गभावा-नतविरतजना-नन्ददायिस्वभावाः ॥२॥
जैनेन्द्रं जैनसङ्घ-क्षतिहननपरं, त्रोभवीतुक्षताग्रं
सम्यक्त्वा वासिताना-मपहृतमदनं, दुष्टतापापहारि ।
दुर्भेद्यान्तस्तामिस्रा-विघटनशशभृ-त्सोदरंरातवृत्त-
माराध्योच्चैर्गुणाली-भृदमरसभया-संस्तुतं स्वमतंद्राग् ॥३॥
दिश्यात्सब्रह्मशान्तिः, सुखमतुलतरं, च्छत्रदण्डोदपात्रं
सच्छोभाढ्यंदधानो-नवकुसमकरैः, स्वच्छभामण्डलाढ्यः।
बिभ्रन्मुक्ताक्षमालां, मुनिजनहितद-स्तप्तचामीकराभो-
योवक्राणांग्रहाणां, प्रशमनमतनो-त्साम्प्रारीतिकानाम् ॥४

## श्रीकुन्थुनाथजिनस्तुतिः ॥ १७ ॥

( मालिनीवृत्तम् )

शमितमरणजातिंकुन्थुनाथंमदान्तं
   जिनपतिमनिमेषै-र्लोचनैःपीयमानम् ।
अमरपतिततीनां, दीर्णतापंनमामि
   निजपरिकरभाजां, भाजनंमोक्षलक्ष्म्याः ॥ १ ॥
सकलजिनपतिभ्य-स्त्रायकेभ्यस्त्रिलोक्या-
   स्त्रवदनरवेभ्यः, सारवादेरतेभ्यः ।
कनकसुमगतिभ्यो-नाकिनाथस्तुतेभ्य-
   स्तनुवचनमनोजंमामकीनंनमोऽस्तु ॥ २ ॥
प्रवचनममितंवो-जैनराजंविकास-
   न्नयगमपदभङ्गैः, पावनंशर्मदद्यात् ।
दमितकुसुमचापं, चारुनीतिप्रतीत-
   मभिलषितसुरोर्वी-जातमाराधनीयम् ॥ ३ ॥
सदसिफलकरास्ते, सैरिभींप्रौढगात्रां
   गतवतितडिदाभे, दत्तदीनप्रमोदे ! ।
झटितिपुरुपदत्ते, सन्तुमेसत्प्रसादा-
   त्रिकसदसिफलाभ्यांभ्राजमानाऽग्रहस्ते ॥ ४ ॥

# श्रीमदरजिनस्तुतिः ॥ १८ ॥

( मालिनीवृत्तम् )

नमतजिनवरंतं, भव्यलोकामुदारं
प्रमदसुरनरेशो-र्दीयमानप्रभावम् ।
व्यमुचदखिललक्ष्मीं, चक्रिणोलोष्टवद्यो-
द्रुतकनकनिभंस-न्नारिजातंप्रधानम् ॥ १ ।
यममरपतिराजि-स्तुष्टुवेधीररावा
समवसरणभूमौ, राजिता स्तोत्रगीतैः ।
तमनघजिनवर्गं, निर्मदामोदमाना
स्मरतरुचिरभावा, भासयन्तं समन्तात् ॥ २ ॥
जिनपतिमतमाद्यं, भीमसंसारवार्द्धि-
क्षुभितजनभयौघो च्छेदिभिन्नप्रमोहम् ।
कुरुतहृदयसाध्यं, सर्वसौख्यैकहेतु-
मपगतपरभीतिक्षिप्रमुद्योतवन्तः ? ॥ ३ ॥
जगतिविविधवर्णं, वैनतेयंप्ररूढा
हुतवहनसमाभा, चारुचक्रैर्विभाति ।
निरुपमदवतुल्यै-र्हारिचक्रेश्वरीया
मुखमतनुविदध्या-त्पुण्यधीर्धामधारी ॥ ४ ॥

---

## श्रीमल्लिनाथस्तुतिः ॥ १९ ॥

( उपजातिवृत्तम )

तनोतुशान्तिंभुविमल्लिनाथः, प्रियङ्गुरोचिस्तनुमुज्जिहानः ।
अनघ्यशोभामचिरांशुदीप्तं, विडम्बयन्नंबरमंशुमाली ॥ १ ॥
स्तुवीतभव्याजगदाशुरक्षतो-जिनेश्वरानर्चितपादपङ्कजान ।
वपुर्व्यथापीडितदीनमानवं, स्रजंदधानान्नवपुष्पनिर्मिताम् ॥२॥
जिनेन्द्रसंभाषितआगमार्थो-गमोक्तियुक्तिप्रथितप्रमाणः ।
शमावहन्संपदमादधातु, क्षताऽतनुक्रोधतमोमनोभूः ॥ ३ ॥
वराभिधानेकृतसंस्थितिर्मे, यक्षाधिपः क्रीडतुमानसेनगे ।
कपर्दिनामाद्रिपमाश्रयन्भा-ऽश्यामीकृताशश्वकितेन्द्रकुञ्जरम् ॥४॥

---

## श्रीमुनिसुव्रतजिनस्तुतिः ॥ २० ॥

( उपजातिवृत्तम )

भवाज्जिनेशोमुनिसुव्रतोवो-ऽवताज्जनौघावनतोनिकामम् ।
निरस्तचेतोभवमानबाध-श्चलत्प्रभामण्डलदीपिताशः ॥ १ ॥
नमामितं जैनगणंविमाय-मपारसौरभ्यसुमाननायम् ।
ननामदेवेन्द्रवराङ्गनाल्नं, प्रभावधामाऽसमसाररोचिः ॥२॥

सिद्धान्तजैनोत्तमरक्षभव्या-न्नतानजस्रंदयितोमुनीनाम् ।
नयप्रमाणाततशर्महेतो-र्निरस्तपापापरभीतियोगः ॥ ३ ॥

क्षिणोतुविघ्नानिसुवर्णवर्णा, तवाधिरूढोचितगोधिकाशाः ।
विभासयन्तीनिजभाचयेन, गौरीवरीयोवदनारविन्दा ॥४॥

---

## श्रीनमिनाथजिनस्तुतिः ॥ २१ ॥

( शिखरिणीवृत्तम )

नमिः पापत्राता, विदलयतुमेकर्मविततिं
विमायासंचारो-विधुतमदमानोऽतिरभसा ।
प्रणेताहृद्याभो-नमदमरभव्याभयकृतां
प्रगल्भानङ्गच्छि-द्भवभयहरोहृद्यवचसाम् ॥ १ ॥

जिनाधीशव्रातः, शमितभवदावानलभयः
नमन्नाकीशानां, वरमुकुटरत्नारुणपदः ।
नतानन्तान्त्रातु, क्षपितमदमोहातितिमिरः
पराभूतानङ्गः, प्रवरवरदानैकविदुरः ॥ २ ॥

श्रुतंस्फीत गीत, जिनपतिकदम्बेनानिखिलं
भवांतङ्कच्छेदि, प्रमितनयभङ्गेनानिचितम् ।

जनानन्दं दिश्या-द्भवभयहरं धर्मसदनं
मुधर्मायां कामं, स्तुतममरलोकैः सुखमयम् ॥ ३ ॥
विपक्षश्रेणिंवो-विघटयतुकालीधृतगदा
समारूढाऽम्लान-प्रवरकमलं निर्भयकरी ।
वराक्षाणांमालां, विशदवदनाऽऽनन्दवसति-
र्दधानानिर्माया, जलधितनयातुल्यविभवा ॥ ४ ॥

---

## श्रीनेमिनाथजिनस्तुतिः ॥ २२ ॥

( उपजातिवृत्तम )

बभञ्जयोलक्षमितं नृपाणां, कदम्बकं निर्जितराजकंतम् ।
राजीमतीतापद नेमिनाथं, नमामि दीप्तं यदुपालितारम् ॥१॥
याप्रौढराज्यं प्रविहायराजी, प्रव्रज्ययारक्तमाबभूव ।
रजोवदक्षीणमहाप्रभावा, सासेव्यतांपुण्यजनैर्जिनानाम् ॥२॥
वाक्तावकीनाजिनपुङ्गवस्तात्, शस्ताऽतिसूक्ष्मार्थपदार्थदर्शिनी ।
निर्भिन्नमोहारितमोवितान,हितायमऽक्षोभ्यतमाऽन्यवादिनाम्
यत्पादसेवामकरोज्जनौघः, सिंहाधिरूढाऽऽम्रसुलुम्बिहस्ता-
साम्बाविभूतिंवितनोतुशुद्ध-सुवर्णवर्णारिपुभीतिभेत्री ॥४॥

# श्रीपार्श्वजिनस्तुतिः ॥ २३ ॥

( शार्दूलविक्रीडितवृत्तम् )

मालामायतबाहुरालिरतिमु-त्पार्श्वः प्रभुर्भ्रामरी
दध्रेयामपिबत्प्रभाभरचितो-मांरक्षतात्पातकाद् ।
शुद्धांतिप्रवरद्विजालिरतनु-क्षेमध्वानिर्यत्क्रमौ
दैवाब्जेषुनिषादिनौरुचिरभोऽ-भूतांसभूतिप्रदः ॥ १ ॥
अव्यात्सापरमारमाऽतिरुचिरा, राजीवनेत्राऽभया
राजीजीवभयापहामातिमतां, सेव्याजिनानांसदा ।
याहृद्याऽमलकीर्त्तिबोधजनका, साराऽधिकामादरं
सर्वान्भूतगणानजेयविभवा, निर्मानजन्मक्षतिः ॥ २ ॥
जैनीवागतिविस्तृताऽमलगमाऽ-सद्योगसंहारिणी-
नूतादेवकदम्बकेनसमुदा, शास्त्रीनराणांसदा ।
दद्यान्नूतनमर्थमाश्रितवती, निष्पातकामामुद-
मादेयामलरोधिकाजनमनो-हन्नोयशोवर्द्धिनी ॥ ३ ॥
यायाताऽजगरेन्द्रमायतिहिता, निस्त्रिंशहस्ताऽभया,
मुग्धानामरयोपिदर्चितपदा, कान्तालकान्ताऽमदा ।
साऽहीनाग्र्यवधूस्तवाऽस्तुसुखदा, त्रैलोक्यरक्षाकरी-
निर्भिन्नारमरंसरोजवलय-श्यामाङ्गभामण्डला ॥ ४ ॥

# श्रीमद्वीरजिनस्तुतिः ॥ २४ ॥

( शार्दूलविक्रीडितवृत्तम् )

निर्मानानमदिन्द्रमस्तकपतत्सामोदनिर्निद्रक-

मन्दारालिरजोऽरुणाङ्घ्रिकमल-क्षोणीकृतारक्षण ।

वीरक्षेमविधानदक्षसुतरां, निर्वाणशर्माणिमे-

देहित्वंजितसङ्गमोहगतरुग् , सिद्धार्थभूपाङ्गज ? ॥ १ ॥

यस्या, भूमितलेऽरराजविपुलं, धर्मोचितंस्थानकं

दीव्यानन्दसुचक्रकेतुकुसुमं, सालत्रयीराजितम् ।

सादीप्ताजिनसंहतिःमुखततिं, भक्तिप्रियाणामिह

दिश्यादक्षयरोचिषाऽमरजनाऽधीशार्चिता कामदा ॥२॥

आनन्दोल्लसिताऽमरेन्द्रवनिता, संस्तूयमानामुदा

भङ्गैर्भूरिभिराततापरमता-नर्थद्रुमाऽनेकपः ।

अक्षय्यंसुखमातनोतुविशदा, ते भारतीतीर्थकृत्

व्यापन्मानमनोभवस्मयमनुज-क्षोभान्तकृद्धाम्बरी ॥ ३ ॥

मत्तेभक्षयदीक्षितेक्षतिहते, कण्ठीरवेराजिनी-

भाराजीप्रविराजितेपरभवो-त्कृष्टेऽचिराभारुचौ ।

भव्यानम्रविनीतनाकिवनिता-संसेव्यमानक्रमे

सम्यग्रावनिवारितारिपटलक्षोभाऽम्बिकेत्वंसदा ॥ ४ ॥

॥ इति श्रीचतुर्विंशतिजिनस्तुतिग्गमत्संपूर्णताम ॥





शास्त्रविशारदजैनाचार्ययोगनिष्ठश्रीमत्सद्गुरुश्री-
बुद्धिसागरसूरिचरणसरोजेभ्यो नमः।

## श्रीसुखसागरगुरुस्तुतिः ॥

( पञ्चचामरछन्दः )

प्रचण्डचण्डमुण्डमोहमारमारिहारिणं
विशुद्धशुद्धिसाधनप्रसाधनप्रसाधकम्।
प्रसन्नसन्नताङ्घ्रिसङ्गिनं सदाननाम्बुजं
भजन्तु जन्तुजातयः सुखोदधिं सुखाप्तये ॥ १ ॥

सुशान्तसन्ततिः सतां निवृत्तवृत्तिसेविनी
यदीयपादपङ्कजोन्नतिं प्रणम्य निर्मला।
सुधामुधाविधायकं निपीय यद्वचोऽमृतं
बभूव तं सुखोदधिं गुरुं भजस्व भावतः ॥ २ ॥

अमेयमानशालिनो मनस्विमुख्यगामिनो
भवोदधिप्लवोपमक्रियामनेकपाविनीम्।

निरीक्ष्य यत्कृपानिधेः सकाशतोऽन्वहं स्वयं
शुभक्रियारता बभूवुराश्रयन्तु तं गुरुम् ॥ ३ ॥

अनन्तशान्तबोधवारिराशिमुन्नताशयं
निजोरुदीव्यभावनाप्रभावनाशिताऽशिवम् ।
प्रमोदभूलतावितानवारिवाहकोत्तमं
भजध्वमेव मोदतः सुखोदधिं गुरुं सदा ॥ ४ ॥

समस्तदेशकष्टलेशता गताऽऽशु शोषतां
निरन्तसेव्यसिद्धिरायतिक्षमा जनेऽजनि ।
यदीयदीव्यमूर्त्तिरत्नजातयोगतो जनाः
श्रयध्वमेकभावतः सुखाम्बुधिं गुरुं सदा ॥ ५ ॥

यदल्पकल्पना कृताऽपि भूरिसिद्धिसाधिका
करालकालभूतभीतिहारिणी जगत्त्रये ।
भविष्यदाधिवारिणी प्रतारिणी मनोभुव-
स्तमीड्यमानमन्तु शर्म्मसागरं गुरुं मुदा ॥ ६ ॥

विशालशिष्टदृष्टिसारिणी यदुद्भवाऽभया
क्षितिप्रकाण्डमादधाति भक्तिपुष्पसत्फलम् ।
विवेकवारिदानतोभवन्ति सर्वसंपदः
स सद्गुरुः सुखाब्धिरत्र जायतां विभूतये ॥ ७ ॥

यदन्तिकं सुशान्तिदं गता वरादरा नरा
बभूवुरुच्चभावधारिणो महादयायुताः ।
भवाऽनलार्चिषाऽतितप्तजन्तुशीतलाऽम्बुदं
नमन्तु तं सुखोदधिं गुरुं सुमङ्गलप्रदम् ॥ ८ ॥

---

# श्रीजिनस्तोत्रसंग्रहः

## ॥ श्रीकेसरीयातीर्थस्तोत्रम् ॥

( पञ्चचामरछन्दः )

प्रकृष्टकृष्टलोकवृन्दसंनतक्रमाम्बुज-
प्रशान्तशान्तदेहिकामदाहवारिदानन ।
प्रभातभातभानुभासमानपिङ्गलप्रभ ?
नमोऽस्तु ते सदाऽऽदिनाथ केसरप्रियप्रभो ? ॥१॥

विदेशदेशवासिनो जना अनेकधा रता,
निवृत्तिवृत्तिशालिनोऽदराः समेत्य पुञ्जतः ।
सुकुङ्कुमस्य पूजयन्त्यहो वपुस्त्वदीयकं,
नमोऽस्तु ते सदाऽऽदिनाथ केसरप्रियप्रभो ? ॥२॥

प्रकृष्टनीलनीलरत्नसुन्दरद्युतिव्रज-
स्त्वदीयदेहजः सुजातपुण्यपुञ्जशालिनाम् ।
विराजते विशिष्टपापहारकः सदोज्ज्वलो,
नमोऽस्तु ते सदाऽऽदिनाथ केसरप्रिय प्रभो ? ॥३॥

समृद्धिसिद्धिदानदक्षयक्षलक्षसेवित,
प्रचण्डलोकसंस्थितारिवृन्दकष्टनाशन ।
मुधा धराधिपाऽधरीकृताऽखिलाङ्घ्रिधारिणे,
नमोऽस्तु ते सदाऽऽदिनाथ केसरप्रिय प्रभो ? ॥४॥

विचित्रचित्रमण्डपत्रयाङ्किते सुमन्दिरे
विराजमानराजराजचर्चितक्रमांबुज ।
सरागरागहारिणे विहारिवृन्दतायिने
नमोऽस्तु ते सदाऽऽदिनाथ केसरप्रिय प्रभो ? ॥५॥

चमत्कृतिः सदा त्वदीयपादपङ्कजाश्रिता
प्रणामकारिमोदधारिणां सुलोचनांबुजे ।
विशिष्टशिष्टनैकधास्वरूपदीप्तिदायिने,
नमोऽस्तु ते सदाऽऽदिनाथ केसरप्रिय प्रभो ? ॥६॥

विशालशालशालमानधामधारिणे महा-
धराधरप्रधानदुर्गमार्गभीतिहारिणे ।

सदा नदत्यहो यदीयतूर्यवृन्दमद्भुतं
नमोऽस्तु ते सदाऽऽदिनाथ केसरप्रिय प्रभो ? ॥७॥

अमन्दमन्दभावनामरुप्रदेशपाविने
कलौ मलौघहारिणेऽघहारिणे सुदेहिनाम् ।
विभिन्नभिन्नचेतसामखण्डितोग्रदीप्तये
नमोऽस्तु ते सदाऽऽदिनाथ केसरप्रिय प्रभो ? ॥८॥

स्वभावभावितात्मना सुपुण्यशालिनाऽङ्गिना
प्रभातकाल उत्तमं हि केसरप्रियाऽष्टकम् ।
सुखप्रदं सुभण्यते सदैकभावतो हृदि
तदा क्रमेण शैवसंपदं श्रयेत्स मानवः ॥ ९ ॥

---

## श्रीशङ्केश्वरपार्श्वनाथस्तोत्रम् ॥

( शार्दूलविक्रीडितवृत्तम् )

त्रैलोक्याधिपरम्परोपशमनक्षेमप्रधानौषधं
कैवल्याधिपतिं चराचरपतिं देवाधिदेवस्तुतम् ।
संख्यातीतवरेण्यचारुचरितं सम्यक्त्वसारप्रदं
श्रीशङ्केश्वरपार्श्वनाथमुनिपं ध्यायामि नित्यं मुदा ॥१॥

तिग्मांशुस्तनुतां जगाम भवतोऽनन्तप्रभाराजिभिः
शीतांशुः क्षयतां गतोऽपि नितरां तच्चिन्तया दूरगः ।

मन्ये भावतया नमन्ति परमं ते यान्ति धामाऽक्षयं
श्रीशङ्खेश्वरपार्श्वनाथमुनिपं ध्यायामि नित्यं मुदा ॥२॥

स्थूलाभोगवता सहस्रफणिना छत्रायितं मूर्ध्नि ते
तेन त्वं जगदीश कालभयहल्लोकेषु संस्तूयसे ।
इत्थं कस्तव पद्धतिं प्रभवति प्रोद्धर्तुमन्तः परः
श्रीशङ्खेश्वरपार्श्वनाथमुनिपं ध्यायामि नित्यं मुदा ॥३॥

संसाराम्बुनिधौ पराजयपदं यः प्राप्य भग्नोत्सवः
सोऽरं त्वत्स्नपनाम्बुसेचनतया धत्ते यथाकामितम् ।
प्राचीना धरणीधवा हि समरे जाता जयश्रीयुताः
श्रीशङ्खेश्वरपार्श्वनाथमुनिपं ध्यायामि नित्यं मुदा ॥४॥

तीर्थाधीश कियाँस्तवास्ति महिमा तत्कीर्त्तितुं न क्षमा
वाग्देवी वचसांपतिर्विधिरपि त्यक्तान्यकार्यव्रजाः ।
इत्याश्चर्यमशेषवेदिनि विभो नास्ति त्वयि क्ष्मातले
श्रीशङ्खेश्वरपार्श्वनाथमुनिपं ध्यायामि नित्य मुदा ॥५॥

भो विश्वाधिपते त्वदीयशरणं संप्राप्य के भावतो
मृत्युं जन्मजराभयं च सुखतो नो जिग्युरात्मप्रियाः ।
सस्मृत्याऽपि भवोदधिः क्षयति चेत्त किं पुनर्दर्शना-
च्छ्रीशङ्खेश्वरपार्श्वनाथमुनिपं ध्यायामि नित्यं मुदा ॥६॥

ये तीर्थाधिपते नमन्ति भविनस्त्वत्पादपद्मद्वयं
संसाराम्बुनिधिं तरन्ति तरसा चाऽत्राऽपि संभुज्य शम् ।
भावस्यैव महार्घताऽत्र नियता तस्माद्वरा भावता
श्रीशङ्खेश्वरपार्श्वनाथमुनिपं ध्यायामि नित्यं मुदा ॥७॥

किं हेयं किमहेयमाशुकरणीयं किंकुकृत्यं किमु
धर्माऽधर्मविधानकश्च किमिति क्षित्यां न के जानते ।
सार्वज्ञं विमलं परार्थघटकं शास्त्रं तदर्थक्षमं
श्रीशङ्खेश्वरपार्श्वनाथमुनिपं ध्यायामि नित्यं मुदा ॥८॥

( वसन्ततिलकावृत्तम् )

येषां मनःसरसि पार्श्वमुनीश्वरस्य
स्तोत्रोज्ज्वलच्छद इह क्षमिणां स्थिरीस्यात् ।
ते मृत्युभावमपहाय महात्मभावं
यान्ति क्रमेण मनुजाः परमार्थभाजः ॥ ९ ॥

---

## श्रीमदर्बुदाचलस्तोत्रम् ॥

( वसन्ततिलकावृत्तम् )

भक्तार्त्तिनाशनकरं विशदप्रभावं,
भक्तामरासुरनरेन्द्रनतक्रमाब्जम् ।
संसारसिन्धुतरणोत्तमपोतकल्पं,
श्रीअर्बुदाचलवसद्वृषभं स्तवीमि ॥ १ ॥

ध्यानस्थितं मुनिवरा वचनं त्वदीयं,
हृद्गोचरं प्रविदधुः समशीलवन्तः ।
ते मोक्षसिद्धिवशगा वशिनो बभूवुः,
श्रीअर्बुदाचलवसद्वृषभं स्तवीमि ॥ २ ॥

विघ्नानि यान्ति विततानि तव प्रभावा-
न्नाशं विभो जगदनन्यहितानुबन्धिन् ? ।
सर्वार्थदाननिपुणो न विभुस्त्वदन्यः
श्रीअर्बुदाचलवसद्वृषभं स्तवीमि ॥ ३ ॥

स्तोत्रप्रिया नरगणा भवशान्तिकारं,
सौम्यं प्रभो तव महागुणराशिमाशु ।
चित्ते विभाव्य भवभीतिपराङ्मुखाः स्युः
श्रीअर्बुदाचलवसद्वृषभं स्तवीमि ॥ ४ ॥

संसारतापविधुराः परिणामसिद्धा-
स्तद्धेतुरत्र भवतश्चरणानुपातः ।
कस्त्वत्प्रभावविमुखो गुरुसंगरक्तः
श्रीअर्बुदाचलवसद्वृषभं स्तवीमि ॥ ५ ॥

को बुद्धिमान्विदितभूरिगुणप्रतापं,
स्वल्पाणुधामविभवं जुषते विहाय ।
कालान्तकक्रमगतोऽपि भवान्तकारिन्,
श्रीअर्बुदाचलवसद्वृषभं स्तवीमि ॥ ६ ॥

भव्या जनास्तव विभो शरणं प्रपन्ना-
स्तीर्त्वाऽपमृत्युमनघाः शिवशर्मभाजः ।
रेजुः समस्तधरणीधवपूज्यपादाः,
श्रीअर्बुदाचलवसद्वृषभं स्तवीमि ॥ ७ ॥

आदिप्रभो तव पदाब्जमहं प्रणम्य,
मुक्तोऽस्मि संसृतिभयादखिलात्सुखेन ।
नाऽतः परं मम भयं भवजातदुःखा-
च्छ्रीअर्बुदाचलवसद्वृषभं स्तवीमि ॥ ८ ॥

# श्रीचारूपतीर्थस्तोत्रम् ॥

( शार्दूलविक्रीडितवृत्तम् )

मेघश्याममनोहराकृतिजुषं चक्षुष्मतां शान्तिदं,
दातारं विभवान्विचित्रसुखदाँस्त्रातारमागन्तुकान् ।
हन्तारं भवभूततापमखिलं भक्तिप्रियोल्लासिनां,
चारूपेश्वरपार्श्वनाथमनिशं भक्त्या स्तुवे श्यामलम् ॥१॥

हाटकराजतरत्नभासुरमहाच्छत्रत्रयभ्राजिनं,
नागेन्द्राच्छफणासहस्रविलसन्मौलिप्रभादीपिनम् ।
केयूरप्रतिबद्धबाहुयुगलं चेतोहराङ्गप्रभं,
चारूपेश्वरपार्श्वनाथमनिशं भक्त्या स्तुवे श्यामलम् ॥२॥

कर्मारिप्रतिरोधकं गुणगणान्विस्तारयन्तं क्रमात्,
संसाराम्बुधितारकं शिवगतिश्रेयःप्रदानक्षमम् ।
रागद्वेषमहारिवारविजयप्राप्तप्रशस्तिं क्षणा-
च्चारूपेश्वरपार्श्वनाथमनिशं भक्त्या स्तुवे श्यामलम् ॥३॥

यत्पादाम्बुजसेवनेन मुनयो दीक्षाफलं लेभिरे,
यद्ध्यानं शिवगामुका जनवरा रात्रिन्दिवं कुर्वते ।
तं तत्त्वार्थविभासकं जिनपतिं त्रैलोक्यरक्षाकरं,
चारूपेश्वरपार्श्वनाथमनिशं भक्त्या स्तुवे श्यामलम् ॥४॥

सर्वैः साम्यतया द्विजादिमनुजैर्यस्य प्रभोः सेवितं,
भक्त्युल्लासिमनोभिरङ्घ्रिवनजं सद्रेखया शोभितम् ।
सत्याऽसत्यविवेकमित्थमनघा जानन्ति लोकोत्तमा-
श्चारूपेश्वरपार्श्वनाथमनिशं भक्तया स्तुवे श्यामलम् ॥५॥

संप्रेक्ष्य प्रथमां स्वभावमधुरां मूर्त्तिं जगत्पावनीं,
यस्य क्षेमविधायिनीं नरगणास्तापत्रयोन्मूलनीम् ।
संसारार्णवतारिणीं निजजनुःसाफल्यमातन्वते,
चारूपेश्वरपार्श्वनाथमनिशं भक्तया स्तुवे श्यामलम् ॥६॥

यत्सेवा शिवसन्ततिं रचयति क्षेमं तनोति क्षितौ,
कीर्त्तिं दिक्षु महोज्वलां तनुजुषां विस्तारयत्यञ्जसा ।
चेतः प्रापयति प्रसादमतुलं तृष्णां छिनत्तिक्षणा,
च्चारूपेश्वरपार्श्वनाथमनिशं भक्तया स्तुवे श्यामलम् ॥७॥

सिद्धं यं शरणं प्रपद्य बहवो भव्या भवं भावुका,
निर्मथ्य क्रमवर्जिता निजगुणैर्जग्मुः श्रियं शाश्वतीम् ।
सर्वापत्तृणराशिवह्निमतुलं तं तस्थिवांसं हृदि,
चारूपेश्वरपार्श्वनाथमनिशं भक्तया स्तुवे श्यामलम् ॥८॥

---

# श्रीउपर्यलातीर्थस्तोत्रम् ॥

( पञ्चचामरवृत्तम् )

भवभ्रमान्नितान्तजातपातकारिनाशकं,
ज्वलज्जगल्लयप्रदाशुभानलोत्तमाम्बुदम् ।
उपर्यलाख्यपत्तनप्रजामनोऽभिरञ्जकं,
नमामि ते पदाम्बुजद्वयं मुदाऽन्तिमप्रभो ? ॥ १ ॥

करालकालभीतिरीतिवारि हारि शर्मदं,
पतत्पतङ्गरश्मिराशिहासिकान्तिमण्डलम् ।
नमन्नराऽभयप्रदं प्रजेशशक्रवन्दितं,
नमामि ते पदाम्बुजद्वयं मुदाऽन्तिमप्रभो ? ॥ २ ॥

समानमानमित्रशत्रुसन्तति क्षपाकरा-
क्षयातिशीतिमाश्रितं श्रितान्तिकं चराचरैः ।
जगत्रयाऽतिपावनं नमज्जनामराऽवनं,
नमामि ते पदाम्बुजद्वयं मुदाऽन्तिमप्रभो ? ॥ ३ ॥

नितान्तभावभासुरैः सुरैः स्वलोकलोकितं,
सदाधरीकृतापदावलीष्टलीलयाऽश्रितम् ।
शुभोन्नतिप्रकाशकं कदध्वभेदकारकं,
नमामि ते पदाम्बुजद्वयं मुदाऽन्तिमप्रभो ? ॥ ४ ॥

स्खलल्लघुप्रमादमान्द्यहारकौषधं वरं,
विचारसारदानदायि तायि भाविचेतसाम् ।
विकारकारलोभमानमोहवारि तारकं,
नमामि ते पदाम्बुजद्वयं मुदाऽन्तिमप्रभो ? ॥ ५ ॥

तव क्रमाम्बुजोपमं न विद्यतेऽन्यदक्षयं,
परःसहस्रविघ्नघातकारि तीर्थपात्रकम् ।
भवाटवीभ्रमोऽस्ति तद्विलोकि देहिनां न हि,
नमामि ते पदाम्बुजद्वयं मुदाऽन्तिमप्रभो ? ॥ ६ ॥

कथञ्चिदेकभावतोऽपि दृष्टिगोचरीकृतं,
त्वदीयपादपङ्कजं जनुर्जराभयापहम् ।
समुद्भवन्ति मङ्गलान्यलौकिकानि भूस्पृशां,
नमामि ते पदाम्बुजद्वयं मुदाऽन्तिमप्रभो ? ॥ ७ ॥

निशान्तमुच्चसंपदां मुदान्तशान्तषट्पदै-
र्निषेवितं प्रभारसोन्नतश्रियाऽतिशोभितम् ।
सुभव्यजन्मसार्थकत्वकारकं दयाभृतं,
नमामि ते पदाम्बुजद्वयं मुदाऽन्तिमप्रभो ? ॥ ८ ॥

---

# श्रीमातरतीर्थस्तोत्रम् ॥

( वसन्ततिलकावृत्तम् )

सर्वज्ञ ! मोहरिपुमर्दितजीर्णभावा-
स्त्वद्दर्शनेन विकला भववृद्धिकामाः ।
मार्गं विहाय विधुरा विपथं प्रयान्ति,
ध्यायामि मातरपुरःस्थितसत्यदेवम् ॥ १ ॥

कामार्थिनः सुखधिया वनवीथिकासु,
भ्रान्त्वा परार्थविवशा विपदं भजन्ति ।
त्वत्पादपङ्कजगताः सुखिनो भवन्ति,
ध्यायामि मातरपुरःस्थितसत्यदेवम् ॥ २ ॥

देवाऽधिदेवपदवी सुलभा नतानां,
त्वत्पादवारिजयुगे जगदेकनाथ ? ।
सर्वामयाश्च विनतान्हि परित्यजन्ति,
ध्यायामि मातरपुरःस्थितसत्यदेवम् ॥ ३ ॥

मोक्षार्थिनोऽपि तव दृष्टिपथप्रयाता-
स्तीर्त्वा भृतिं शिवसमृद्धिमनुव्रजन्ति ।
किं किं न साधयति नेत्रलता त्वदीया,
ध्यायामि मातरपुरःस्थितसत्यदेवम् ॥ ४ ॥

कल्पद्रुमस्तु भवसौख्यविधानदक्ष-
स्त्वच्चिन्तनं पुनरलौकिकशर्मदायि ।
तस्मात्त्वदीयतुलनां न भजन्ति केऽपि,
ध्यायामि मातरपुरस्थितसत्यदेवम् ॥ ५ ॥

सत्यस्त्वया निगदितोऽतिविशुद्धधर्मः,
सत्यं त्वदीयमखिलं भुवि सच्चरित्रम् ।
सत्यस्वरूप भगवँस्तव सत्यवर्त्म,
ध्यायामि मातरपुरस्थितसत्यदेवम् । ६ ॥

सन्तः समाधितधियः सततं स्मरन्ति,
त्वन्मूर्त्तिमुन्नतिकरीं भवशान्तिहेतोः ।
तस्मादनन्यशरणं त्वमसि प्रजानां,
ध्यायामि मातरपुरस्थितसत्यदेवम् ॥ ७ ॥

मायाविनो हि बहवो भुवि देवलोका-
आश्रित्य तान्नरवराश्रुतधर्मकृत्याः ।
सत्यार्थिनस्तव मतं प्रसमीक्ष्य जाता,
ध्यायामि मातरपुरस्थितसत्यदेवम् ॥ ८ ॥

---

# श्रीशेरीशातीर्थस्तोत्रम् ॥

( शार्दूलविक्रीडितवृत्तम् )

यः संसारसुखं तृणाङ्कुरसमं संभावयँश्चेतसि,
चिन्तारत्नसमं चरित्रमनघं त्रैलोक्यरक्षाक्षमम् ।
स्वीकृत्याऽक्षयबोधिदानमदिशत्सर्वज्ञसर्वोपमः,
शेरीशाभिधपत्तनाधिवसनं पार्श्वप्रभुं नौमि तम् ॥ १ ॥

पूजा यस्य विभोः कृता शुभततिं विस्तारयत्यञ्जसा,
सल्लक्ष्मीं विभवोचितां वितरति ध्वस्तार्थितृष्णाभ्रमाम् ।
आधिव्याधिपरंपरां विघटयत्यत्यन्तदुःखोदधिं,
शेरीशाभिधपत्तनाधिवसनं पार्श्वप्रभुं नौमि तम् ॥ २ ॥

यद्दृष्टिक्षण आतनोति विविधां माङ्गल्यहारावलीं,
सद्बोधं दिशति प्रियं प्रथयति त्रैलोक्यरक्षावहम् ।
मानं मर्दयति क्षणाज्जनयते सौजन्यजन्यं यशः,
शेरीशाभिधपत्तनाधिवसनं पार्श्वप्रभुं नौमि तम् ॥ ३ ॥

यद्ध्यानं विधुनोति पूर्वनिचिताऽरिष्टाऽष्टकर्माऽऽवलीं,
कैवल्यं कलयन्त्यमन्दमुनयो यद्ध्यानतेजःश्रिताः ।
तेनैवोच्चगतिं श्रयन्ति विबुधा नित्योत्सुका योगिनः,
शेरीशाभिधपत्तनाधिवसनं पार्श्वप्रभुं नौमि तम् ॥ ४ ॥

यन्मूर्त्तिर्हृदि धारिता भवभवां, पीडां समुन्मूलय-
त्यानन्दं जनतापहं नवनवं, स्थाणूकरोत्यात्मनि ।
कौशल्यं प्रकटीकरोति विमदं, सर्वार्थसिद्धिप्रदं,
शेरीशाभिधपत्तनाधिवसनं, पार्श्वप्रभुं नौमि तम् ॥ ५ ॥

यत्पूजास्नपनेन विघ्नविततिर्याति क्षयं सर्वथा,
पञ्चेषुः क्षयतां व्रजत्यनुदिनं, शाम्यन्ति घोरारयः ।
कुष्ठादिप्रचुरार्त्तयोऽपि निखिला, नश्यन्त्यरक्ता इव,
शेरीशाभिधपत्तनाधिवसनं, पार्श्वप्रभुं नौमि तम् ॥ ६ ॥

यन्मूर्धस्थितवायुभोजनफणा-सन्तानसंदर्शनाद्,
भीताऽऽखुक्षयकृद्गणः परवशः, संयाति देशान्तरम् ।
आपत्तिप्रभवे सति क्षणमपि, स्थानं भजेत्को हि त-
च्छेरीशाभिधपत्तनाधिवसनं, पार्श्वप्रभुं नौमि तम् ॥७॥

संसारोदधिपोतमक्षयकरं, संसेव्य चारित्रकं,
शस्यानन्तगुणाकरं भवभय-च्छेत्तारमिष्टप्रदम् ।
सर्वत्राऽभयदानदक्षमखिल-त्रस्ता[illegible]नात्रायकं,
शेरीशाभिधपत्तनाधिवसनं, पार्श्वप्रभुं नौमि तम् ॥ ८ ॥

## ॥ श्रीमदगाशितीर्थस्तोत्रम् ॥

( मन्दाक्रान्तावृत्तम )

बोभूयन्ते विभवबहुलास्त्वत्प्रभावप्रयुक्ता-
जङ्गम्यन्ते जननमरणान्निर्भयत्वं गुणज्ञाः ।
सासद्यन्ते निरुपमवरां मङ्गलानां प्रशस्ति
नन्नम्येसु-व्रतमुनिपते ऽगाशिपूर्भासिबिम्बम् ॥ १ ॥

मान्यो यावा-नमितमहिमा तावकीनस्त्रिलोक्यां,
तादृक्केषा-मभयजनको नैवदृष्टः श्रुतोवा ।
मन्दायन्ते सुगतिभवने निर्धनानां (निर्दयानां) मनांसि,
नन्नम्येसु-व्रतमुनिपते ऽगाशिपूर्भासिबिम्बम् ॥ २ ॥

सौम्याकारा सकृदभिगता मूर्त्तिरध्या त्वदीया,
तेषांचित्तं कलयति सदा निर्मलं साम्यभावम् ।
संसाराब्धि-श्चुलुकवदहो जायते क्षेमकारी,
नन्नम्येसु-व्रतमुनिपते ऽगाशिपूर्भासिबिम्बम् ॥ ३ ॥

स्वर्गस्थानाः पदमुपगता- देवता उच्चसारं,
तद्धेतुस्त्व-ज्जनमहिमा वर्णितुं नैव शक्यः ।
सर्वज्ञोक्त-प्रवचनवचःसारिणां किं दुरापं,
नन्नम्येसु-व्रतमुनिपते ऽगाशिपूर्भासिबिम्बम् ॥ ४ ॥

सिद्धीरम्या वरयतिजनं त्वत्पदाम्भोजरक्तं,
सौभाग्यत्वं सरतिनिकटं सर्वदक्षप्रभावम् ।
विभ्यद्दूरे व्रजतिविषमं दुर्भगत्वं हि तस्मा-
न्नम्ये मु-व्रतमुनिपतेऽगाशिपूर्भासिबिम्बम् ॥ ५ ॥

कल्याणार्थी तवमुखगतो जातसंकल्पकल्पः,
सिद्धेकार्ये विमुखपटुता दृश्यते नैव केषाम् ।
चित्रन्त्वेत-द्भुवनविदित? त्वत्प्रतापस्य लोके,
नन्नम्ये मु-व्रतमुनिपतेऽगाशिपूर्भासिबिम्बम् ॥ ६ ॥

जाग्रत्तेज-स्ततिरतिकरं भ्रान्तिशान्तिप्रदायि,
जन्तूद्वेग-श्रमभयहरं पूरिताशाप्रपञ्चम् ।
भानूद्योतं विरचयदलं वृद्धिभावं वरेण्यं,
नन्नम्ये मु-व्रतमुनिपतेऽगाशिपूर्भासिबिम्बम् ॥ ७ ॥

संसारान्त-प्रथनविभवं धारयत्कान्तिकान्तं,
भक्त्याऽधीनं परमकरुणं स्वच्छताशालिशीलम् ।
शश्वच्छान्ति-प्रथितविमलाकारमाराधनीयं,
नन्नम्ये मु-व्रतमुनिपतेऽगाशिपूर्भासिबिम्बम् ॥ ८ ॥

## श्री[redacted]ड़ियातीर्थस्तोत्रम् ॥

( वसन्ततिलकावृत्तम् )

श्रीमत्पदाम्बुजलुठद्भवभीरुवृन्दैः
संनादितं प्रवरसद्मयदीयमच्छम् ।
देशान्तरागतसुभव्यगणैः प्रकीर्ण-
मादीश्वरं झघडियाविलसन्तमीडे ॥ १ ॥

भूत्वा प्रसन्नमनसो विधिवद्यदीयां,
पूजां प्रफुल्लकुसुमोत्करतो विधाय ।
अक्षीणवित्तविभवाः सुरलोकपूज्या-
आदीश्वरं झघडियाविलसन्तमीडे ॥ २ ॥

दीव्यर्द्धिसिद्धिसमलङ्कृतचारुचैत्यं,
विभ्राजते प्रखरघण्टनिनादघुष्टम् ।
यस्य प्रधानपुरुषोपचितान्तराल-
मादीश्वरं झघडियाविलसन्तमीडे ॥ ३ ॥

देवासुरेन्द्रनरनायकवन्दिताङ्घ्रिं,
सद्भक्तिभावितजनार्चितदीव्यमूर्त्तिम् ।
दृग्गोचरीकृतमलंसमतावहद्भि-
रादीश्वरं झघडियाविलसन्तमीडे ॥ ४ ॥

संसारकूपपततां सुदृढं विशाल-
मालंबनं सुहिततत्त्वविवेचितारम् ।
रागान्धिताक्षमनुजोष्णकरोपमान-
मादीश्वरं झघाडियाविलसन्तमीडे ॥ ५ ॥

संतारकं निजपदाब्जनतप्रजानां
भास्वच्चराऽचरगणं प्रविलोकितारम् ।
स्रष्टारमक्षयदयाश्रितधर्मबोध-
मादीश्वरं झघाडियाविलसन्तमीडे ॥ ६ ॥

नुन्नोनयेनत्रिनयोज्झितदेहिवर्गः
संस्थापितो गुणिगणः सुदयाप्रधानः ।
संबोधितो जगति येन कलाकलाप-
आदीश्वरं झघाडियाविलसन्तमीडे ॥ ७ ॥

कोनाम यस्य महिमानमनन्तगेयं
विस्तारतः कथयितुं विभुरस्ति लोके ।
लोकत्रयप्रथितकीर्त्तिवितानकं त-
मादीश्वरं झघाडियाविलसन्तमीडे ॥ ८ ॥

## श्रीझघडियातीर्थस्तोत्रमपरम् ॥

( मन्दाक्रान्तावृत्तम )

यो विश्वेषा-मभयजनकः सत्यवाणीविलासो-
  यः सत्त्वानां विधुरमखिलं नाशयत्यात्मभावात् ।
यःपारोक्ष्यं परगतमजो-ध्यातएव च्छिनत्ति,
  आदीशंतं वरझघडिया-भूषणं नौमि नित्यम् ॥१॥

सद्यः शान्ति-र्भवतिमनना-द्यद्विभूतेर्जनाना-
  मात्मानन्दः प्रभवति परो-त्कर्पतादानदक्षः ।
बाह्योभाव-स्त्यजति हृदयं शुद्धशान्तस्वरूप-
  मादीशंतं वरझघडिया-भूषणं नौमि नित्यम् ॥२॥

सोपानालि-र्विलसति महा-चैत्यसंबन्धिनीया
तामाश्रित्या-ऽक्षयसुखगता जीवलोका(भव्यजीवा)भवन्ति ।
मूर्त्तिर्यस्य प्रवरविभया भ्राजमानां विलोक्य,
  आदीशंतं वरझघडिया-भूषणं नौमि नित्यम् ॥३॥

मूर्त्तियाव-त्तवविपहरां शुद्धधर्मानुरक्ता-
  नो वीक्षन्ते परजनकृपा-कांक्षिणो वीतमोहाः ।
पापच्यन्ते भयदभुवने तावदक्षीणपापा
  आदीशंतं वरझघडिया-भूषणं नौमि नित्यम् ॥४॥

मोक्षाकांक्षा गतभवभया सिद्ध्यति त्वत्प्रणामा-
दुःप्राप्योऽसौ परमभिभवा-दुष्टकर्मारिमूलाद् ।
सिद्धिः साध्या गुरुमुखतया सर्वथामानवाना-
मादीशं तं वरझघडिया-भूषणं नौमि नित्यम् ॥५॥

यस्याऽधीनं जगतिविशदो-द्धारकं धर्मवर्त्म
यस्याऽधीनं जगदभिमतं शर्म्मसन्तानमिद्धम् ।
यस्याऽधीनं कलिगुणगणो-च्छेदकं मुख्यतत्त्व-
मादीशं तं वरझघडिया-भूषणं नौमि नित्यम् ॥६॥

पारावारे जननमरण-क्लेशवित्ते भवेऽस्मिन्,
पीड्यन्तस्त्व-च्चरणवनभू-नावमासद्य सद्यः ।
तीरोत्तीर्णाः सुखमनुभव-न्तोनखिन्नाः परत्र,
आदीशं तं वरझघडिया-भूषणं नौमि नित्यम् ॥७॥

हृद्ये तत्त्वे परिणतमति-स्तावकीने महीने
भव्यो नव्योऽनवरतमसौ संसृतेर्याति पारम् ।
स्मारं स्मारं हृदि तव पदं ध्यानमग्नाजनास्त-
दादीशं तं वरझघडिया-भूषणं नौमि नित्यम् ॥८॥

---

ॐ

## श्रीमदिलादुर्गतीर्थस्तोत्रम् ॥

( शिखरिणीवृत्तम् )

महोत्तुङ्गस्थान-स्थित[illegible]-
[illegible]स्थानावा-स्सविधमनुयातैरिवसदा ।
निजभ्रान्तिच्छित्यै, समुपचरिते चित्रविभवे,
इलादुर्गे दुर्गे, जयति जिनतीर्थं जयकरम् ॥ १ ॥

प्रकृष्टोच्चैस्तुङ्गो-न्नमगुणगणा शृङ्गवितति-
र्नृणां दूरस्थाना-मपिहरति चेतो गुरुरिव ।
यदीया धर्मार्थ-प्रकटनपरा भूरिविभवा,
इलादुर्गे दुर्गे, जयति जिनतीर्थं जयकरम् ॥ २ ॥

प्रभावज्ञैः पूज्यै-र्मुनिवरचयैर्नादितगुहा-
महातत्त्वज्ञान-प्रथनपटुतामूलगुरवः ।
विलोक्यन्ते यस्मि-न्नुचिरतरमध्या बहुविधा
इलादुर्गे दुर्गे, जयति जिनतीर्थं जयकरम् ॥ ३ ॥

सुसम्यक्त्वोपेता-न्यपरशुभतीर्थानि विपुला-
न्यहो राजन्तेऽस्मिन्, विमलमतिदानैकनिपुणे ।
क्रमात्पुंसां नित्यं, गमनपरिपाटीं कृतवता-
मिलादुर्गे दुर्गे, जयति जिनतीर्थं जयकरम् ॥ ४ ॥

ज्वलत्कान्तिव्राता, अनवमगुणा औषधिगणा-
विकासन्तेऽजस्रं, शमिततपनातापितजनाः ।
तमस्विन्यां यस्मि-न्मणिमयसुदीपा इव सदा,
इलादुर्गे दुर्गे, जयति जिनतीर्थं जयकरम् ॥ ५ ॥

सरःश्रेणीशश्व-द्विमलजलपूर्णा प्रतिपदम्
सुधासारश्रुत्वा, शशधरसकाशात्स्थित इव ।
गरुत्मन्तो यस्मि-न्मधुररटनानन्दजनका-
इलादुर्गे दुर्गे, जयति जिनतीर्थं जयकरम् ॥ ६ ॥

यदीयां सद्वृद्धिं, निजपटुतया को न विबुधः
शिरो धुन्वन्ब्रूते, जितविबुधराजोपवनिकाम् ।
मृगेन्द्रा अप्यास्मिन, बहुसुखतया सन्ति बहुला-
इलादुर्गे दुर्गे, जयति जिनतीर्थं जयकरम् ॥ ७ ॥

मृगाः सौम्याकारा-स्तृणजलमतानन्दविभवा-
भ्रमन्त्यक्षुब्धास्ते, प्रभुपदसमीक्षापटुधियः ।
यथाकालं सर्वो-निजहितकरः को न भवति,
इलादुर्गे दुर्गे, जयति जिनतीर्थं जयकरम् ॥ ८ ॥

---

# श्रीमदिलादुर्गशान्तिनाथस्तोत्रम् ॥

( भुजंगप्रयातवृत्तम् )

सदाक्रान्तशान्तिं महामारिशान्तिं,
प्रजाशान्तिदं शान्तवैरिप्रभावम् ।
महाक्रोधचण्डारि शान्तिप्रतान-
मिलादुर्गसंस्थं स्तुवे शान्तिनाथम् ॥ १ ॥

कलौशान्तिदानप्रदं शान्तमूर्त्तिं-
सदा देवदेवाधिपः स्तुत्यकीर्त्तिम् ।
गुणान्कीर्त्तितुं नो समर्थोऽपि जीव-
इलादुर्गसंस्थं स्तुवे शान्तिनाथम् ॥ २ ॥

शशी तिग्मरश्मिः समेतौ किमत्र,
यदीयावतंसच्छलेन स्वभावात् ।
प्रभोर्दर्शनाकांक्षयोद्भूतमोदा-
विलादुर्गसंस्थं स्तुवे शान्तिनाथम् ॥ ३ ॥

विभोर्भालपट्टस्थितं शुद्धरत्न-
मनर्घ्यं सदाद्योतयद्धाम सर्वम् ।
प्रदीपौ प्रकुर्वद्द्विभावर्जितौ द्रा-
गिलादुर्गसंस्थं स्तुवे शान्तिनाथम् ॥ ४ ॥

विशाला विभोः शुद्धपद्मासनस्था,
सुमूर्त्तिः सुरूपा प्रमाणप्रसिद्धा ।
मनोहारिणी स्वागतानां नराणा-
मिलादुर्गसंस्थं स्तुवे शान्तिनाथम् ॥ ५ ॥

जना भाविनो भक्तिसंभारवन्तः,
समेत्याऽत्र दुष्कर्मभीतिं त्यजन्ति ।
सुकर्माऽर्जयित्वा लभन्तेऽमरत्व-
मिलादुर्गसंस्थं स्तुवे शान्तिनाथम् ॥ ६ ॥

प्रभो ! शान्तिनाथ त्वमेवासि लोक-
त्रयाधीशिता दुःखहर्त्ता जनानाम् ।
भवे त्रायको विद्यते कोऽपि नाऽन्य-
इलादुर्गसंस्थं स्तुवे शान्तिनाथम् ॥ ७ ॥

अहं दर्शनात्ते विभो जातकृत्यः,
स्मरामि त्वदीयं पदद्वन्द्वमीड्यम् ।
सदा प्रार्थितार्थप्रदातारमीश-
मिलादुर्गसंस्थं स्तुवे शान्तिनाथम् ॥ ८ ॥

---

( उपजातिवृत्तम् )

चौलुक्यवंशाऽम्बरभानुमाली, सम्यक्त्वशाली सुकृतैकभोगी ।
न्यायप्रधानो जितमोहमानो-जितेन्द्रियः सर्वत एष मान्यः ॥१॥

नराऽमरेन्द्रस्पृहणीयशीलः, कुमारपालः क्षितिपालमुख्यः ।
शशास भूमण्डलमेकवीरः, शचीपतिर्देवभुवं यथैव ॥ २ ॥

निर्मापितस्तेन वरेण्यवर्णः, श्रीशान्तिनाथस्य महाविहारः ।
प्राक्पुण्यभाराजितशुद्धकीर्ति-व्रजः स्थितोरम्य इवाऽतिभाति॥३

इयदरक्षोणिधरोविभूषां, श्रीशान्तिनाथालयतो विशेषात् ।
चकास्ति संप्राप्य धराधराणां, राजेव चूडामणितां प्रपन्नः॥४॥

द्विपञ्चसंख्याप्रमितानि जैन-चैत्यानि रेजुः परितः प्रधानम् ।
श्रीशान्तिगेहं जितनाकशोभं, तारागणस्था शशिमण्डलीव॥५॥

अयं जिनालयो दुर्गे, कुमारपालनिर्मितः
खरतरीयक्रमायात पट्टावल्यामितिस्मृतम् ॥६॥

श्रीवीरतोबाणवसुद्विवर्षे, बभूविवान् संप्रतिभूमिपालः ।
व्यभूषयद्यो धरणीं जिनालयैः, सहस्रसंख्यैरतुलप्रभाधरैः ॥७॥

बिम्बानि तेनैव सहस्ररश्मि-तेजोभिभावीनि विधापितानि ।
विलोकयन्संप्रतिभव्यलोक-स्तनोति सम्यक् शिवसंपदं स्राक् ॥८

इलादिदुर्गेऽत्रविधापितोऽसौ, श्रीशान्तिवासः क्षितिपेन तेन ।
इत्थं पुरावृत्तविदोवदन्ति, प्रमाणमेतत्सुधिया विलोक्यम् ॥९॥

इयदरं प्राक्तनमेव पत्तनं, जिनालयश्रेणिविराजमानम् ।
चकास्ति सम्यक्त्वविभासि चेतः, श्राद्धः वसन्त्यत्र मुनीतिभाजः॥

( शार्दूलविक्रीडितवृत्तम् )

बाणद्वीपरसोर्वराभिकलिते, संवत्सरे वैक्रमे,
जीर्णोद्धारइलानगेऽस्यविहित-श्चैत्यस्य शान्तिप्रभोः ।
श्रीसंघेन जिनोक्ततत्त्वपटुना, सर्वर्द्धिदानादिना,
दुष्कर्मारितृणानलः सुखकरः, स्वर्गाऽपवर्गप्रदः ॥११॥
राष्ट्रोडाऽन्वयवारिजोष्णकिरणः, सन्न्यायनिष्णातधी-
र्जीर्णोद्धारविधानकोचहृदय-स्तत्त्वार्थवेदिप्रियः ।
दीनानुद्धरयन्नजस्रविभवः, कल्पद्रुकल्पोपमः,
श्रीमद्दौलतसिंहभूमिरमणः, शास्ति प्रजामीडरे ॥ १२ ॥

---

## श्रीपञ्चासरपार्श्वनाथस्तोत्रम् ॥

( शार्दूलविक्रीडितवृत्तम् )

यद्भासा प्रविभाति तिग्मकिरणो-ल्लासिप्रभाक्षामता,
तार्थिन्या जगतीतलं तलमिवा-ऽऽदर्शीयकं कंप्रया ।
प्राचीनोर्जितकर्मजातविविध-व्याध्यन्धकाराऽपहं,
श्रीपञ्चासरपार्श्वनाथचरणा-ऽम्भोजद्वयं नौम्यहम् ॥ १ ॥
धर्माऽऽरामकलाकलाधरनिभाभावागवृन्दाऽदरां
राकेशक्षतिदं सुदन्तसुषमोल्लासद्यदीयाननम् ।
लक्ष्यीकृत्य दिगन्तकीर्त्तिममलां संयाति दीव्यप्रभां,
श्रीपञ्चासरपार्श्वनाथचरणा-ऽम्भोजद्वयं नौम्यहम् ॥ २ ॥

संसारोद्धृतिरन्तिमागुणजुषां, यद्ध्यानतोजायते,
दुष्टान्यष्टलयं व्रजन्ति सुधियां, रौद्राणि कर्माणि च ।
संपत्तिः सुलभा नरामरगण-श्लाघ्या स्वनर्घ्या नृणां,
श्रीपञ्चासरपार्श्वनाथचरणा-ऽम्भोजद्वयं नौम्यहम् ॥ ३ ॥
पापं वारयति क्षमां जनयति, क्षेमं करोत्यञ्जसा,
दारिद्र्यं दलयत्यलं वितनुते, कीर्तिं परां शाश्वतीम् ।
सन्तोषं वितरत्यथाऽपि यदनु-ध्यानं विधत्तेऽक्षयं,
श्रीपञ्चासरपार्श्वनाथचरणा-ऽम्भोजद्वयं नौम्यहम् ॥ ४ ॥
यन्नेत्रमबलप्रभाशमयति. क्षोभं कुवादोद्भव,
नैरुज्यं नितरां तनोति सुमदं, संपादयत्यात्मनि ।
दुर्वारां दलयत्यनङ्गसुभट-प्रोद्दामभीतिं सदा,
श्रीपञ्चासरपार्श्वनाथचरणा-ऽम्भोजद्वयं नौम्यहम् ॥ ५ ॥
यत्पुण्योपचितं नरामरगणाधीश-मुदा वन्दितं,
मिथ्यामोहतमोनुवासितधियां, तथ्यस्वरूपोष्णगुः ।
सीरं सारतरं दुरन्तविषमा-पत्तिक्षमादारणे,
श्रीपञ्चासरपार्श्वनाथचरणा-ऽम्भोजद्वयं नौम्यहम् ॥ ६ ॥
भीतिर्भूतगताऽन्यचक्रजनिता, लुप्ताऽऽस्पदा लक्ष्यते,
क्षत्रातङ्कगणान्तकारिविभुना, स्नात्राम्बुना चारुणा ।
यस्याऽऽमन्दसुभक्तिभासुरसुर-क्षोणीन्द्रसंपूजितं,
श्रीपञ्चासरपार्श्वनाथचरणा-ऽम्भोजद्वयं नौम्यहम् ॥ ७ ॥

दुर्वाराः कमठादिभिर्विरचिता-नैकोपसर्गाः क्षयं,
भेजुर्यस्य तमोऽपहारितपसा, ताम्यज्जनातायिना ।
दीव्यौर्वादिकतापतापितजना-नन्दप्रदानोचितं,
श्रीपञ्चासरपार्श्वनाथचरणा-ऽम्भोजद्वयं नौम्यहम् ॥ ८ ॥
श्रीमत्पट्टणपत्तनेऽधिवसतिं, सौभाग्यसारास्पदं,
यः पार्श्वाधिपतिः करोति जनता-भावोन्नतिप्रापकः ।
तस्येदं भवभीतिहारिमनुजो-यः कीर्त्तयेदष्टकं,
निर्वृत्तिं समुपैति सोऽतिरभसा, निर्मानमारात्तिकः ॥९॥

## श्रीमद्रविसागरगुरुस्तुतिः ॥

( शिखरिणीवृत्तम् )

मुनीन्द्रश्चारित्र-प्रथितपरमानन्दविभवः,
क्षयातीताक्षुद्र-द्रविणकलिते पत्तनवरे ।
महेशानाऽभिख्ये, प्रवर सुखसंपत्तिमगमत्
रविश्रीरोदन्वा-न्निहतदुरिताऽरातिनिचयः ॥ १ ॥

( शार्दूलविक्रीडितवृत्तम् )

क्षेत्रेनैकविधे विबोधहलभृत्, सद्बोधि बीजंवप-
न्निर्दोषव्रतवारिसेचनविधिं, नित्यं प्रकुर्वन् मुदा ।
मिथ्यात्वोपहतात्मखेचरगणं, निर्वासयन्त्रासव-
स्तिग्मांशुप्रवरोदधिर्विजयतां, चारित्रिणां त्रायिनाम् ॥२॥

शान्तिवस्तनुताच्छमिक्षितिपतिः, क्षीणाष्टकर्मावलि-
निर्मानोद्धुरमारकोपभवभी-पञ्चाक्षजन्यातपः ।
वृत्तिंशुद्धतरांसमानविषयां, त्रासत्रयोन्मूलनीं-
धत्तेयोजगदेकपूज्यचरितोऽ-शीतांशुपाथोनिधिः ॥३॥

( भद्रिका [ललित] छंदः )

जयति ते महापादुकायुगं, विशदबोधिदं वृंददारकम् ।
विपदपांनिधौ कुम्भसंभवो-निखिलदेहिनामन्तरारिहन्? ॥४॥
शुभमनोरथश्रेणिसाधनं, तवपदाम्बुजद्वन्द्वमिष्टदम् ।
रविसरित्पते? सद्गुरो? गुरुं, वितरतु क्षितौमङ्गलावलीम् ॥५॥
शिवमंत्रसुतंत्रनिधानगृहं, भवतोयनिधि क्षयकुंभ भवः ।
कमला विमलाऽधिगतामवरा, तवपादयुगं रविवारिनिधे! ॥६॥

( तोटकवृत्तम् )

भवदंध्रियुगं भवतापहरं, दमितापरचित्तरतिप्रकरम् ।
रविसागर सद्गुरु रत्ननिधे?, जयतादखिलश्रमणाधिपते? ॥७॥

( शार्दूलविक्रीडितवृत्तम् )

श्रीमच्छान्तिलतागृहं भवभय-क्षोभान्तकं दिव्यभं-
दद्यादभूरिसुमङ्गलानि नितरां, नीतिप्रियाणां नृणाम् ।
सौम्याकार विभावसुक्षतविभं देवासुरैर्वन्दितं,
सद्बोधामृतवारिधे दिनपते? त्वत्पादुकामण्डलम् ॥८॥



श्रीमत्सच्चारित्रचुडामणिक्रियोद्धारकरविसागरगुरु-
चरणकमलेभ्योनमः ॥

## ॥ सुभाषितमुक्तावलिः ॥

प्रणम्यजैनेंद्रपदारविन्दं, बुद्ध्याब्धिसूरीश्वरसद्गुरुञ्च ।
तनोमिहृद्यार्थपरांसुभाषित-मुक्तावलींसज्जनमानसप्रियाम् ॥१

( अनुष्टुप्वृत्तम् )

कृतान्तत्रासंसंदग्धो-याति नो सुमतिप्रियः ।
वैमनस्यं सुखद्रोहि, को जनेषु हि मत्सरः ॥ १ ॥

कुलालचक्रवच्चारु, भ्रांत्वाऽरण्ये भवाभिधे ।
किं त्रिलोकितमक्षीणं, भवारण्यसुखप्रदम् ॥ २ ॥

सारंसारंगृहीत्वैव, निःसारं परिवर्जयेत् ।
इक्षुयन्त्रोऽपि गृह्णाति, रसमेव न चापरम् ॥ ३ ॥

ताम्बुलं चर्वितंदत्ते, रक्ततांमुखमण्डनम् ।
सत्सङ्गो हि सदामान्यो, लोकत्रयविभूषणम् ॥ ४ ॥

परबोधकृते सन्तो-ऽसन्तुष्टा विमलाशयाः ।
परोपकारव्यसनाः, कियन्तः सन्तिभूतले ॥ ५ ॥
स्वदोषान्नैवपश्यन्ति, परदोषपरायणाः ।
जनताविमनस्काहि, पूर्वापरविचक्षणा ॥ ६ ॥
कामंद्विषन्तुलोभेन, मायिनोदययोज्झिताः ।
वायुनावेगतःक्षिप्ते, धूलिपुञ्जेऽपि किं रवेः ॥ ७ ॥
शशिसाम्यं सदाशस्यं, सदसज्जनतापहम् ।
स्वसुखायैव कोयत्नं, कुरुते न निजोचितम् ॥ ८ ॥
कालातिक्रममासाद्य, विपरीतगतिं व्रजेत् ।
सहस्रकिरणोऽप्यत्र, भजते विविधक्रमम् ॥ ९ ॥
सुधांसुधाकरोत्येव, वाक्सुधासुधियोदिता ।
तत्त्वज्ञानं ततः प्रोक्तं, तस्मात्सैवसुधास्मृता ॥ १० ॥
विफलं चरितं लोके, गर्हास्थानमनादितः ।
येनकेनाऽप्युपायेन, साफल्यं तनुते बुधः ॥ ११ ॥
क्रमसाध्यानि कार्याणि, सफलानि भवन्ति हि ।
अकाले नैव पच्यन्ते, सस्यानि कृषिकर्मणाम् ॥१२॥
नम्रीभवन्तिसर्वत्र, तरवःफलशालिनः ।
सचेतना अपिस्तोका-विपरीतक्रियापराः ॥ १३ ॥

कामितानि न सिध्यन्ति, परद्रोहविधायिनाम् ।
सुलभा सर्वथा तेषां, विपत्तिः परिकीर्त्तिता ॥१४॥
बुद्धिमन्तो जना यत्र, तिष्ठन्ति तत्र संपदः ।
नियन्त्रीसंपदांसैव, तस्मात्तच्छरणं शुभम् ॥ १५ ॥
मानसं कलुषं येषां, निर्निदानमहोभवेत् ।
तन्मुखं सर्वदाहेयं, कृष्णसर्पवदप्रियम् ॥ १६ ॥
पावना भावना येषां, दृश्यतेऽकारणान्नृणाम् ।
तेऽमरेशगणैः पूज्या-लोकोपकारकारिणः ॥ १७ ॥
यास्तेसेवाविहीनस्य, स्युस्तामामेसमृद्धयः ।
परिणामविडम्बिन्यः, संपदोऽधिकृतामिव ॥ १८ ॥
कारागारसमोऽसारः, संसाराऽब्धाऽतिसंकरः ।
हीनसत्त्वैः सदाहेयः, स्वार्थसिद्धिसमीहया ॥ १९ ॥
भूरिशोभवदावाग्नौ, भवता शलभायितम् ।
चिन्तयस्व हितार्थं स्वं, मोहबुद्धिं परित्यज ॥ २० ॥
हिताहिति परिज्ञानं, विदुषामेवकेवलम् ।
बिभर्त्तिजठरं कोन, क्षतिमायेभवार्णवे ॥ २१ ॥
लब्ध्वाभवंभवारण्ये, यावदन्तककाष्ठहृत् ।
नायाति सन्मुखंताव-द्वात्मरक्षापरोभव ॥ २२ ॥

मालाकारः पयः सेक्ता-दुद्यानसंपदान्वितः ।
तथैवाजन्मतोधर्मोऽ-राधना फलति ध्रुवम् ॥ २३ ॥
कुटिलेष्वपि कौटिल्यं, सज्जनादधते न वै ।
सूर्याचन्द्रमसोः छाया, सर्वत्र समवर्त्तिनी ॥ २४ ॥
विवेकिनो विकारं नो, प्राप्नुवन्तिक्षयावहम् ।
फलन्तितरवः काले, फलदा न विघातकाः ॥ २५ ॥
भवन्तिमहतः पुण्या-त्कामितानि पदेपदे ।
कृतकर्मवशाल्लोका लभन्ते हि शुभाऽशुभम् ॥ २६ ॥
दैवमुद्दिश्यलोकोऽयं, साधयत्यखिलेप्सितम् ।
यत्रकुत्ररतिर्लोके, सुखदा प्राणिनां ध्रुवम् ॥ २७ ॥
यादृशी संगतिर्येषां, तादृशं तद्विचेष्टनम् ।
न हि बकुलसंसर्गा-त्सत्फलाप्तिर्भवेन्नृणाम् ॥ २८ ॥
काञ्चनाकारसद्बुद्धिं, क्रीणन्तिपुण्यशालिनः ।
काञ्चनं जनयत्याशु, सद्बुद्धिः कामगौरिव ॥२९॥
संपत्तिर्बुद्धिमूलैव, धर्ममूला हि सा स्मृता ।
सोऽपि सत्संगमूलःस-पूर्वपुण्यप्रभावतः ॥ ३० ॥
सन्तुष्टोऽमृतपानेन, सदाचारविराजितः ।
व्यरमत्स्वक्रियारक्तः, परस्वेभ्यः शुभाशयः ॥३१॥

क्षमाविभूषणं येन, धारितं धरणीतलम् ।
तेन संभूषितं सोऽपि, भुवनत्रयमण्डनः ॥ ३२ ॥

सतीनां भूषणं शीलं, तुरगाणां गतिस्तथा ।
शुककाकभृतांनादो-विदुषां संस्कृतध्वनिः ॥ ३३ ॥

भीरवोऽनागतां भीतिं, विचिन्त्य विमनायिताः ।
प्रारब्धं हि परित्यज्य, स्वार्थभ्रष्टा भवेभवे ॥ ३४ ॥

भीरुता सर्वथा त्याज्या, स्वार्थहानिविधायिनी ।
अर्णवे वसतां भीतिः, कीदृशीमकरोद्भवा ? ॥ ३५ ॥

कृतान्तेन जगत्सर्वं, ग्रस्तमेव न संशयः ।
दश ग्रीवादयः सर्वे, श्रूयन्ते नाममात्रतः ॥ ३६ ॥

धर्मध्वंसी जनः कोऽपि, विपदांभाजनं भवेत् ? ।
विषंपीत्वाचिरायुः स्या-त्कथंदैवनियोजितः ॥३७॥

परोपकारकर्तृणां, प्रभूतानिधनानिवै ।
दिनेदिने प्रवर्द्धन्ते, किमसाध्यं नृपार्थिनाम् ॥३८॥

परस्परोपरक्तानां, संपदः सुखदायकाः ।
रागोहिनीतिसंभूतो-दुर्लभोलुब्धचेतसाम् ॥ ३९ ॥

बहिरेवशुभाकार, आन्तरं मलदूषितम् ।
कथंतत्रशुभोभावः, सान्त्वनन्तु निरामयम् ॥४०॥

परगेहगता लोके, पूज्यन्ते गुणिनो जनाः ।
निजधाम्नि विराजन्ते, विगुणा अपि देहिनः ॥४१॥
गुणार्जनं सदा शस्यं, विदुषां वाचि संस्थितम् ।
यतितव्यं तदर्थं हि, निर्गुणं नाटकं जगत् ॥ ४२ ॥
गुणारविन्दमालां ये, धारयन्ति नरोत्तमाः ।
वन्दनीया नरेशानां, भवन्ति गुणधारिणाम् ॥४३॥
रज्यन्ते सुखिनो लोका, गुणिनां दर्शनेनवै ।
प्रजारञ्जनतोमान्या, भवन्ति गुणिनः सदा ॥४४॥
क्रोधादिस्तेनतोरक्ष्या-गुणसंपत्तयोनृभिः ।
क्षमाखड्गोनयद्धस्ते, सनालं रक्षितुं गुणान् ॥४५॥
व्यसनानि प्रभूतानि, प्रथितानि धरातले ।
शुभानि सेवनीयानि, मतिमद्भिर्विमुक्तये ॥ ४६ ॥
दुःखोदर्काणि दुष्टानि, व्यसनानि विमोहिनाम् ।
वीक्षितव्यानिनोतानि, भुजगाभोगवत्सदा ॥ ४७ ॥
दुर्गुणाः परिहर्त्तव्याः, श्रेयः सन्ततिघातकाः ।
श्रेयोमूलमिदंजन्म, तदतीतं निरर्थकम् ॥ ४८ ॥
गुणवान् श्लाघ्यते लोके, श्लाघितो गुरुतां भजेत् ।
गुरुत्वात्परमं धाम, प्राप्नुयान्नैव संशयः ॥ ४९ ॥

नीचोर्नीचगतिं नैव, त्यजेत्कर्माऽनुसारतः ।
वायसस्तीर्थमासाद्य, लभते स्वोचितां क्रियाम् ॥५०॥
क्षुद्रः कोऽपि क्रियांसारां, प्राप्य नैव प्रमोदते ।
विषमो विषमस्थाने, जायते कार्यसाधकः ॥५१॥
उत्पद्यन्ते विलीयन्ते, जगत्यस्मिन्ननेकशः ।
पुण्येनप्रभुतामेत्य, परोपकृतिमान् भवेत् ॥५२॥
बिभर्ति निजठरं लोके, कोनदुष्पूरमाशया ।
स एव परमः प्रोक्तः, परार्थपरिपूरकः ॥५३॥
पराशा पूरितायेन, तेन पूर्णमिदं जगत् ।
क्षणस्थायिन्यहोलोके, कीदृशीजनमूढता ॥५४॥
कृपणाधनमासाद्य, कृतकष्टपरम्पराः ।
परार्थद्वेषिणः खिन्नाः, स्वयं नैवोपभुञ्जते ॥ ५५ ॥
धनिनां धनलाभेन, यद्विनस्यात्परार्थता ।
किं ते न भारभूतेन, विमुखेन निजोचितात् ॥५६॥
लुब्धानराः समासाद्य, विपुलं धनमापदम् ।
लभन्ते रक्षणासक्ता-दुरन्तां पुण्यवर्जिताः ॥ ५७ ॥
प्रायशो विफलं कार्यं, निराबाधमनाश्रयम् ।
सिद्ध्यन्त्येकक्रियासक्तं, प्रभवाधो हि दुष्करः ॥५८॥

कीर्त्तयन्तिसतांसन्तः, संभूतिं विशदाशयाः ।
यथाशर्मजनाःसर्वे, व्रजन्ति विनयाश्रिताः ॥ ५९ ॥
कीर्त्तनं भवपाथोधे-स्तारकं तरणिसमम् ।
पूज्यानां तादृशास्तोका-वसन्ति वसुधातले ॥६०॥
पुण्यदक्षाहताक्षाये, धर्मकर्मपरायणाः ।
तेनरानमदापूर्णा-भूषयन्ति हि मेदिनीम् ॥ ६१ ॥

( पञ्चचामरछन्दः )

करोतुदेशकामितं, प्रभावितं सदामितं,
नरामरेशमानितो नतोनरो नरव्रजैः ।
जरामृतिक्षतिक्षमं मनुष्यवृन्दमुच्यते,
नरत्वसत्त्वलब्धिरत्र सत्फला निगद्यते ॥६२॥

( अनुष्टुप्वृत्तम् )

परद्रोह विधातारः, पतन्तिनरकाऽवनौ ।
तस्मात्तेपरिहर्त्तव्या-दूरतोभूतिमिच्छता ॥ ६३ ॥
किं किं न साधितं तेन, परोपकृतिशालिना ।
महतामपिमान्योऽसौ, वसुधाऽनर्घमण्डनम् ॥६४॥
तपसा शोषितो देहो-भूषयत्यखिलं जगत् ।
भूषणं दूषणाकारं, धर्ममूलविभूषणम् ॥ ६५ ॥

तत्त्वज्ञा एव जानन्ति, धर्मतत्त्वं रसोर्ज्जितम् ।
नहिपाकरसंवेत्ति, दर्वीश्रमसेविनी ॥ ६६ ॥
काचःकाञ्चनसंसर्गा-द्धत्तेमारकतद्युतिम् ।
परीक्षकेण संदृष्टो, निजौचित्यं भजत्यहो ॥ ६७॥
प्रारब्धंस्वंपरित्य, कार्याण्यन्यानियो भजेत् ।
ससमस्तार्थसंमूढो-लोकबाह्यः पदेपदे ॥ ६८ ॥
निजशक्त्यनुसारेण, वर्त्तमानामनीषिणः ।
साधितोभयसत्कार्याः, पर्यन्तेसिद्धिसाधकाः ॥६९॥
स्तेनानां भुजगानाञ्च, शत्रूणाञ्च विरोधिनाम् ।
चिन्तितानि न सिद्ध्यन्ति, जगदेतत्कुतोऽन्यथा ॥७०
व्याधयः शत्रवश्चैव, नोपेक्ष्या उदयं गताः ।
वर्द्धितास्ते परं दुःखं, मरणान्तं दिशन्ति हि ॥७१॥
सहेतुको वरं शत्रुः, सिद्धेहेतौनिवर्त्तते ।
निर्हेतुकाः परं दुःख-दायिनः स्युः पदेपदे ॥७२॥
अनुभूतार्थमादाय, सुखिनो मानवाः सदा ।
परम्पराश्रुतं तथ्या-तीतमर्थापहं वचः ॥ ७३ ॥
नीच संसर्गतो हानि-र्जायते ज्ञानसंपदाम् ।
विलोकयतां खरारूढ-मानवस्य हि लाघवम् ॥७४॥

नीचसङ्गः सदाहेयः, सुधीभिः परमार्थिभिः ।
सितपक्षो दयाग्रस्तः, पक्षहीनोऽकृताखुना ॥ ७५ ॥
नीचसङ्गरतं रक्षः-कुलं नष्टं समूलकम् ।
नश्यत्येव स्वयं नीचः, परानपि विनाशयन् ॥७६॥
उत्तमा यदि नीचानां, सङ्गतिर्जायते क्वचित् ।
यथार्थं तत्फलं लातुं, नैव योग्या भवन्ति ते ॥७७॥
नीचांगतिं प्रपद्यन्ते, नीचा नीचेन कर्मणा ।
कर्मपाशनिबद्धास्ते, बंभ्रमन्ति दुराशयाः ॥ ७८ ॥
कृतापराधलेशानां, शासनं नीतिवेदिभिः ।
इहाऽपि क्रियते योग्यं, परतस्तु कुतो गतिः ॥७९॥
परापवादवादीयः, परलोकभयोज्झितः ।
स्वकृतं सुकृतं क्रीत्वा, परपापान्वितो हि सः ॥८०॥
परचित्तानुतापेन, ये भवन्ति प्रमोदिनः ।
प्रमोदस्तु क्षणस्थायी, परितापो दुरन्तकः ॥८१॥
दुःखितोऽपि स्वयं कुर्वन्, सुखिनोऽपरमानवान् ।
संसारवारिधिंतीर्त्वा, परमंपदमर्जति ॥ ८२ ॥
सज्जनः पीड्यमानोऽपि, दुर्जनेन विडम्बितः ।
स्वकीयां शिष्टतां नैव, जहातितप्रहेमवत् ॥ ८३ ॥

शिक्षितोऽपि जनोऽशिष्टः, कुमार्गं प्रतिपद्यते ।
वायसो बलिनापुष्टो-वीक्षतेऽमेध्यवस्तु हि ॥८४॥
पात्रे प्रयोजिता शिक्ष्या, सुस्थिराऽचलवद्भवेत् ।
तस्मात्पात्रं निरीक्ष्यैव, प्रवृत्तिः सफलानृणाम् ॥८५॥
पात्राऽपात्रविचारेण, प्रवृत्तिः श्लाघ्यतावहा ।
अविवेकोऽन्यथा प्रोक्तः, सदसज्ज्ञानवर्जितः ॥८६॥
परम्पराऽऽगतं कार्यं, विलोक्याविबुधोजनः ।
प्रवर्त्तते स्वयं चान्या-न् प्रवर्त्तयतिगर्हिते ॥ ८७ ॥
अल्पज्ञो नैव जानाति, परमार्थगतिंयतः ।
ततः स्वचरितं योग्यं, मन्यते लोकनिन्दितम् ॥८८॥
नीचः श्लाघ्यपदं प्राप्य, कुरुतेऽनर्थमन्वहम् ।
मूषको व्याघ्रतां प्राप्य, मुनिं हन्तुं समुद्यतः ॥८९॥
निजकर्माऽनुसारेण, संपद्भाक्यो जनो भवेत् ।
मुनिप्रसादनेनाऽपि, मूषिका संवृताम्बुना ॥ ९० ॥
प्रमादिनः स्खलन्त्येव, निजकार्यपराङ्मुखाः ।
प्रमादं तत्परित्यज्य, वर्त्तितव्यं विचारवत् ॥९१॥
अन्यायोपार्जितं द्रव्यं, दीर्घकालं न तिष्ठति ।
तस्मान्नीतिमताभाव्यं, दीर्घायुर्वित्तमिच्छता ॥९२॥

क्लेशेनाऽर्जितवित्तेन, धर्मं यो न प्रसाधयेत् ।
सऋणी केवलं दुःख-भाजनं तु भवेभवे ॥ ९३ ॥

पक्षमात्रसहायोऽपि, शकुनिर्मानसेप्सितम् ।
प्रयाति स्थानमक्षीणैः, सर्वाङ्गैर्दुर्लभं किमु ॥९४॥

मा मनुष्येषु मूर्खेषु, वसतिर्जायतां कदा ।
यावज्जीवं जडासङ्गः, सुकृतैकदवानलः ॥ ९५ ॥

जडतोत्तापितो जन्तु-र्नैव शान्त्यास्पदं भवेत् ।
शान्तानामपि चेतांसि, तापयत्यनलोपमः ॥९६॥

विचित्रो जडतताप-आन्तरोत्तापकारकः ।
जलादीनां प्रयोगेण, शाम्यतिनोतवर्द्धते ॥ ९७ ॥

दैवतालम्बनं लोके, साधनं हि महत्तरम् ।
श्रान्तानां सुलभा शान्तिः, सर्वकार्य विरोधिनी ॥९८॥

यत्रकुत्रगतोऽपुण्यो-भवेदास्पदमापदाम् ।
भाळुरेणवनंघातः, खल्वाटोभग्नमस्तकः ॥ ९९ ॥

( इन्द्रवज्रावृत्तम् )

कार्पण्यदोषोपहतस्वभावो-न कीर्त्तिमौदार्यवतांप्रयाति ।
दीपप्रभादीप्तमेवनैशी, तिग्मांशुभामण्डलहारिशोभाम् ॥१००

( अनुष्टुप्वृत्तम् )

स्नेहः स्वल्पोऽपि संयाति, विस्तारं स्वच्छचेतसि ।
तैललेशोऽपिकासारे, सद्यो व्याप्नोति सर्वतः ॥१०१॥

बालोऽपिगर्जनांकुर्व-न्सिंहोनिपततिक्षणात् ।
मत्तेभमूर्धनिप्राय-स्तेजस्विनामियं स्थितिः ॥ १०२ ॥

विद्याभ्यासवतां कोऽपि, सारंवेत्तिविचक्षणः ।
विचक्षणेष्वपि प्रायो-वक्ताभवतिकश्चन ॥ १०३ ॥

वक्तृष्वपि सहस्रेषु, कश्चिद्धर्मपरायणः ।
धर्मिष्वपिगुणीकश्चि-त्परोपकृतिमान् भवेत् ॥१०४॥

दयादाक्षिण्यहीनानां, नृणांजन्मनिरर्थकम् ।
कवीनामिव माधुर्य-रसातीतोवचःक्रमः ॥१०५॥

जीवनं प्रवरं प्रोक्तं, परजीवोपकारिणाम् ।
स्वार्थसिद्धिं नकेलोके, कुर्वन्ति निजचेष्टिताम् ॥१०६॥

कारागारसमंज्ञात्वा, संसारं सारवेदिनः ।
त्वरन्ति धर्मकार्येषु, सिद्धस्थानं कुतोऽन्यथा ॥१०७॥

जातेन तेन पुत्रेण, किं न वंशसमुन्नतिः ।
कीटाः सहस्रशोभूमिं, जन्मना क्लेशयन्ति हि ॥१०८॥

भवारण्ये भयाक्रान्ते, पर्यटन्ति कुशीलिनः ।
न जानन्ति सुखागारं, धर्माऽधर्मविचारणाम् ॥१०९

अर्थमनर्थदं नित्यं, जानी हि विदुषांवर ? ।
ततो लब्धेन वित्तेन, दानपुष्टिर्विधीयताम् ॥११०॥

किं हेयं किमहेयं च, नैव जानात्यपण्डितः ।
तस्माच्छास्त्रविदाभाव्यं, किमपण्डितपुष्टितः ॥१११॥

सुखदुःखादिभिर्ग्रस्त-मुदयास्तमयं जगत् ।
दर्शयन् सविता।नित्य-मितियात्पुदयास्तताम् ॥११२॥

उत्तराऽऽशापतिर्भक्त्या, महेशस्याप्यराजत ।
धनाध्यक्षत्वमासाद्य, मानवानान्तुकाकथा ॥११३॥

हीनाहिदीनताज्ञेया, बुद्धिधर्मविनाशिनी ।
क्षीणे हि तेजसि क्षिप्रं, व्रजत्यस्तं दिवाकरः ॥११४॥

यावत्बुद्धिर्बलंताव-न्निधियेस्तुबलं कुतः ।
गृहस्थितःकलादो हि, धनं गृह्णाति पुष्कलम् ॥११५॥

महानाडम्बरोऽसार-पदार्थस्य श्रुतिश्रुतः ।
कांस्यपात्रसमोनादो-नैव काञ्चनभाजने ॥११६॥

अपल्पज्ञो गर्वमारूढः, परोत्कर्षं न मन्यते ।
परमार्थज्ञता पूर्णो-विद्वान्विश्वगुणप्रियः ॥११७॥

अहोरात्रं सदाजन्तो-र्गच्छत्यागच्छति ध्रुवम् ।
तेनैव केवलं स्वायुः, क्षीयते हि विधर्मिणः ॥११८॥

पशूनाञ्च नराणाञ्च, विशेषोमतिशालिता ।
अन्यथा तु समं सर्वं, पानभोजनमैथुनम् ॥११९॥

परवादरताजनताऽगतिका, निजकर्मरताऽऽदरवत्यखिला ।
प्रभुताऽभयदासुलभातदनु, क्षमताव्रृणुते किल तं नृवरम्॥१२०

विद्वांसं संगताः सर्वे, न केऽपि मूर्खसंगतौ ।
सर्वथा वर्त्तमानाये, ते भजन्ति विमूढताम् ॥१२१॥

कामं नृपाः सन्तिसहस्रशोऽन्ये, राजन्वतीमाहुरनेनभूमिम् ।
धर्मास्तु दाक्षिण्यदयाप्रधाना-जिनोदितः केवलमेव सत्यः॥१२२

शूरं सदाभक्तियुतं च सूनु-मुत्पादय त्वं जननि! प्रभूत्यै ।
दानप्रियं वन्ध्यतयाविभाव्यं, त्वयान्यथा क्लेशपरम्परातः॥१२३

अनित्याः शत्रवो बाह्या-विप्रकृष्टाश्वते यतः ।
तस्मादभ्यन्तरान्नित्यं, जहित्वं स्वात्मबोधतः ॥१२४॥

सिद्धावस्थासदाशस्या, दीर्घसौख्यमहालयः ।
अभव्येन दुरापाऽसौ, निर्भदाऽन्तिकर्मस्थिता ॥१२५

प्रणमन्ति सुधामूर्ध्ना, क्लिष्टाऽशिष्टक्रियालयाः,
सद्भावभरितस्वान्ता-स्तन्वते सफलं जनुः ॥१२६॥

मनोरथा न सिध्यन्ति, दैवतेच्छा बलीयसी ।
राजद्वारे राजकन्या, विप्रो व्याघ्रेण भक्षितः ॥१२७॥



( अनुष्टुप्वृत्तम् )

वृद्धिमन्तं भवंतीर्च्वां, यत्कृपातस्तनादि[illegible]म् ।
पदमक्षयमासेदु-र्देवं कश्चिद्व्रजानके ॥ १२८ ॥
कृपासारं समाल्योच्य, भूलोकसारनि[illegible] ।
कृपादानपरा ये स्यु-स्तेषां जीवनमुत्तमम् ॥ १२९ ॥
असारे खलु संसारे, के न जीवन्ति देहिनः ।
घृणाध्वविघ्नकर्त्तारः, परप्राणापहारिणः ॥ १३० ॥
कृपामूलाः सर्वे धर्मा-धर्ममूला विभूतयः ।
विभूतिमूलका कृपाति-स्तस्मात्साश्रेयत्सदा ॥ १३१ ॥
दयाहीना नरा लोके, रिच्यन्ते सर्वशक्तिभिः ।
चिन्तामणिसमासैव, लोकत्रयसुखप्रदा ॥ १३२ ॥
दयार्द्रचेतसां चित्ते, तीर्थानि निवसन्त्यहो ।
हरिणा भीरवस्तेषु, विश्वसन्ति कुतोऽन्यथा ॥ १३३ ॥
कृपावन्तश्चिरायुष्का-भवन्ति सुखदायिनः ।
दुराशिषं न गृह्णन्ति, यत्र कुत्राऽपि संगताः ॥ १३४ ॥
कृपावार्द्धिर्वशे यस्य, किमन्यैरत्नराशिभिः ।
प्रदीपर्दीपनं व्यर्थ-मुदिते भानुमालिनि ॥ १३५ ॥
कृपाकोदण्डमादत्ते, यो नराजीवरक्षया ।
किमु न प्रेक्षते स्थानं, निरपायं समन्ततः ॥ १३६ ॥

कृपानावं समासाद्य, तरन्ति विबुधाजनाः ।
भवोदधेर्जलं चेतो-भवग्राहविलोडितम् ॥ १३७ ॥
कृपासारतरं शंवं, शये कृत्वाऽतिभासुरम् ।
मोहमानाद्रिमर्थज्ञ ! विपक्षं कुरु सत्त्वरम् ॥ १३८ ॥
अखण्डनिधिमाराध्य, सत्कृपारत्नसंभृतम् ।
हिंसादारिद्र्यमक्षेमं, निर्वासयत सज्जनाः ! ॥ १३९ ॥
परप्राणा हृता येन, स्वकीयपलवृद्धये ।
त एव जन्तवस्तस्य, घातकाअन्यजन्मनि ॥ १४० ॥
धर्माराधनमिच्छन्ति, धर्मकर्म परायणाः ।
दयामूलं वदन्त्येनं, तत्त्वज्ञानविचक्षणाः ॥ १४१ ॥
धर्माय धर्मलोपाय, यतन्ते गुणिनोऽगुणाः ।
हिमांशुजनितं शैत्यं, धूमकेतुर्यथाकरः ॥ १४२ ॥

( उपजातिवृत्तम् )

दावानलः कोऽपि नवीनएव, प्रकोपरूपोऽत्र विनिर्मितोऽस्ति ।
तपोधनं यो हृदि सन्निविष्टं, भस्मीकरोति क्षणमात्रसंगात्॥१४३॥

( मालिनीवृत्तम् )

अतिथिवदनचन्द्रं, निर्निमेषं विलोक्य,
क्षणमतिसुखदं तं, मन्यते यः कृपालुः ।
तममरगणसेव्यं, जानतां सिद्धरूपं,
दलितभयवितानं, क्षीणसंसारवृत्तिम् ॥ १४४ ॥

नयनविषयगम्या–मोदमातन्वतेऽन्ये,–
विविधवचनयुक्त्या, केचिदानन्ददाः स्युः ।
सहृदयहृदयानि–क्षोभहीनानियस्मा,–
त्स भवति खलु लोके, दुर्लभः शान्तमूर्त्तिः ॥ १४५ ॥

गुणिजनगणमान्यो–याति सर्वत्र मान्यं,
विपदतिलघुभावं, मानवं चैति सद्यः ।
हरशिरसि हिमांशु–र्भ्राजतेऽक्षीणकान्तिः,
कुसुमशरविनाशे, सैव हेतुःप्रदिष्टः ॥ १४६ ॥

स्वपरजनविरोधं, योविदध्यान्मदान्धो–
विशदविपुलकीर्त्ति, नाशयत्यञ्जसा सः ।
सुकृतभवनपङ्क्तौ, दापयत्येव मुद्रा–
ममृतघटमकाले, स्फोटयत्याशुमूढः ॥ १४७ ॥

प्रभवति गुणराशि-र्निर्गुणासु प्रजासु,
जनयति विधुरत्वं, सर्वथा दुर्गुणानाम् ।
शमयति कलिवेगं, लोभिनां मानवानां,
ग्लपयति करणानां, स्वैच्छिकं संभ्रमत्वम् ॥ १४८ ॥

( अनुष्टुप्वृत्तम् )

धर्म एव सदा साध्यो–हितदो विज्ञभाषितः ।
साफल्यं जन्मनो नैव, विना तेन सुमेधसः ॥ १४९ ॥

सुयोजितानि वित्तानि, विघटन्ते वपुष्मताम् ।
तस्मात्तैरेव संसाध्यो-धर्मः कैवल्य सिद्धये ॥ १५० ॥

युक्ताऽयुक्ततया द्वेधा, यतन्ते भवचत्वरे ।
आदिमाः श्लाघनीयाः स्यु-र्निन्दामर्हन्ति चान्तिमाः ॥

सन्त्येके गुणिनः सन्तः, परमार्थपरायणाः ।
स्वार्थस्तु सिद्ध्यति क्षिप्रं, तृणवत्कृपिकर्मणाम् ॥ १५२ ॥

परस्वग्रहणे रक्ताः; किं न गृह्णन्ति देहिनः ।
वित्तमायुः परं प्रोक्तं, तद्धीनं जीवनं वृथा ॥ १५३ ॥

विपदः संपदः सर्वा-यान्त्यायान्ति क्रमेण वै ।
दर्शयत्युष्णगुर्नित्य-मेतन्मानवगोचरम् ॥ १५४ ॥

सर्वत्र सुखमिच्छन्ति, देहिनोभववारिधौ ।
अचिन्तितमहा दुःखं, जायते क्षारता यथा ॥ १५५ ॥

महाशयं नरं क्वापि, विपदो ऽभिभवन्ति नो ।
विलोक्य संपदां राशिं, मोदन्ते नैव तत्त्वतः ॥ १५६ ॥

द्वन्द्वातीतामहासत्त्वाः, सर्वत्र सुखिनः स्मृताः ।
विमुह्यन्तीतरे मुग्धाः, सुखदुःखविभेदतः ॥ १५७ ॥

व्याधिना बाधितालोका-भिषजं यान्ति सत्वरम् ।
नैसर्गिकाऽऽधिशान्त्यर्थं, प्रमादं हि निषेवते ॥ १५८ ॥

विद्युल्लतायते तीव्रः, संपदां विपदां गणः ।
अचिरस्थायिनो भावाः, कुतस्तास्ताश्च सुस्थिराः ॥१५९॥

संपत्तिं च विपत्तिं च, तुल्यरूपतया विदुः ।
उदयाऽस्तगतोभानु-स्ताम्रवर्णो विलोक्यते ॥ १६० ॥

संपत्तिमर्जयित्वा यो-धर्मकर्मरतो भवेत् ।
स सतामग्रणीर्भूत्वा, परत्र सुखमाप्नुयात् ॥ १६१ ॥

मेधावी परमानन्दं, संप्राप्य नैव मुह्यति ।
चिन्तामणिं परित्यज्य, को हि पाषाणमर्थयेत् ॥ १६२ ॥

परिणामसुखस्पर्शी, कश्चिदेव विचक्षणः ।
आपातरम्यताऽन्वेषी, सर्व एव जगज्जनः ॥ १६३ ॥

कालेन महता लोकाः, पीड्यन्ते पापकर्मणा ।
साधनान्यपि संप्राप्य, यतन्ते नैव शर्मणे ॥ १६४ ॥

कर्मतन्तौ निबद्धास्ते, तिर्यञ्च इव मानवाः ।
पर्यटन्ति परायत्ता-बुद्धिहीना यथाबलम् ॥ १६५ ॥

अभीप्सितार्थसिद्ध्यर्थं, को न यत्नं करोत्यहो ।
पिपीलिकाः प्रवाहेण, कुर्वन्ति धान्यसंचयम् ॥ १६६ ॥

रम्यतामनुचेष्टन्ते, रमणीयजना अपि ।
धनत्रयोदशीतिथ्यां, रज्यन्ते पशवो न किम् ॥ १६७ ॥

त्रातारं जीवराशीनां, तत्त्वानां देशकं तथा ।
भवामयनिहन्तारं, को न पूजयति क्षितौ ॥ १६८ ॥
पूज्याऽपूज्यविवेकस्तु, यत्र सद्बुद्धिशालिनः ।
निरस्तभूरुहे देशे, पल्लवानां कुतः स्थितिः ॥ १६९ ॥
पूज्यपूजकभावेन, जगदेतत्प्रकल्पितम् ।
कुतो ऽन्यथा ऽभिमानो हि, सर्वत्र गतिमान भवेत् ॥ १७० ॥
मानाऽमानौ समौ बुद्ध्वा, निजभावरताः सदा ।
नोद्विग्नमनसः क्वापि, सन्तः स्वर्गितरूपमाः ॥ १७१ ॥
निर्माना मानमर्हन्ति, मराला इव मानसे ।
मानिनो वायसप्रख्या–लघुताभाजनंस्मृताः ॥ १७२ ॥
लघुताहेतुकं स्थानं, तुङ्गमुन्नतिसाधकम् ।
भूधराग्रगतं वारि, नीचस्थमपि शुद्धिदम् ॥ १७३ ॥
गुणग्रामरता लोका–वन्द्यन्ते विबुधैरपि ।
सुगन्धलोभतो मूर्ध्नि, ध्रियन्ते ऽम्बुजहारकाः ॥ १७४ ॥
गुणा एव हि पूज्यन्ते, सर्वत्र सुखदायकाः ।
निर्गुणेषु न रज्यन्ते, कोदण्डेष्विव धन्विनः ॥ १७५ ॥
किं कि न साधयत्येष–गुणग्रामो महोत्कटः ।
व्यालायन्ते विकारा हि, क्रोधसन्तानसंभवाः ॥ १७६ ॥

पठन्ति प्राकृतं केऽपि, संस्कृतं च नरोत्तमाः ।
अर्थगौरवता तत्र, माननीया वचस्विभिः ॥ १७७ ॥

यं कंचिदागमं श्रुत्वा, तत्त्वार्थं तत्त्ववेदिनः ।
गृह्णन्ति निजबोधाय, पशूनामपि पाटवम् ॥ १७८ ॥

क्रुद्ध्यन्ति कामिनोबाला–हिताऽहितपराङ्मुखाः ।
यदि न स्यात्सतां संग–स्तेषामुद्धरणं कथम् ॥ १७९ ॥

निजदोषानुसारेण, पुष्यन्ति कामिनां क्रियाः ।
हीनाक्रियाकलापेन, कथं तत्त्वप्रधानता ॥ १८० ॥

तत्त्वबोधविनिर्मुक्ता–बंभ्रमन्ति भवोन्मुखाः ।
काचखण्डप्रभावेण, कथं चिन्तामणिप्रभा ॥ १८१ ॥

स्थाने स्थानेऽश्मनां लब्धिः, सुलभा लुब्धचेतसाम् ।
न क्वापि लभ्यते चिन्ता–रत्नं पुण्योदयं विना ॥१८२॥

सुकृतं नावमासाद्य, भववारिनिधेस्तटम् ।
प्रयातुं यतते विद्वाँ–ल्लोभराशिपराङ्मुखः ॥ १८३ ॥

सन्ति सन्तः कियन्तस्ते, विधिरत्नावलिप्रियाः ।
अपवादपदं त्यक्त्वा, विराजन्ते विदांवराः ॥ १८४ ॥

कातराः कर्मपाशेन, यन्त्रिता निजचेष्टितम् ।
श्रयन्ति केवलं दुःखो–दर्कनिन्द्यतमं सदा ॥ १८५ ॥

स्वार्थदक्षा जनाः सर्वे, परमार्थपरायणाः ।
विरला एव दृश्यन्ते, शाखिन इव सर्वदा ॥ १८६ ॥

कालेन सर्वभूतानि, पच्यन्ते हि पदे पदे ।
तस्माच्छक्त्यनुसारेण, यतितव्यं हिते निजे ॥ १८७ ॥

हितं कोनाम संबुद्ध्य, न कुर्वीत विचक्षणः ।
तदेव जन्मसाफल्यं, यदात्महितसाधनम् ॥ १८८ ॥

कंदर्पदर्पसंरूढा—नष्टात्महितभावनाः ।
रटन्ति विषयाऽऽक्रान्ता-भवकान्तारवर्त्तिनः ॥ १८९ ॥

विषवद्विषयत्रासं, विज्ञाय मतिमान्नरः ।
नित्यमात्मसुखं कुर्या-त्स्वाधीनं निजबोधतः ॥ १९० ॥

विरुद्धाविषया येन, निर्मिता वशवर्त्तिनः ।
स नरो दीव्यभावेन, राजतेऽमरवन्दितः ॥ १९१ ॥

वैरिणो विषयाः प्रोक्ता-निरयस्थानदायिनः ।
शत्रुभिस्तापितालोका-इहैव दुःखभोगिनः ॥ १९२ ॥

मानवा मानिनो नित्यं, परलाघवमानिनः ।
अपमानं पुरस्कृत्य, यतन्ते हितकांक्षया ॥ १९३॥

नाकाले क्षीयते कार्यं, विना यत्नेन योजितम् ।
बहुयत्नोर्जितं चैत-त्प्राप्ते काले विनश्यति ॥ १९४॥

आगतं भयमालोक्य, सद्यः कुर्यात्प्रतिक्रियाम् ।
ज्वलितेऽपि यथावह्नौ, जलक्षेपेण सान्त्वनम् ॥ १९५ ॥
अनिष्टभावना त्याज्या, महाक्षोभकरी सदा ।
क्षुभिते चेतसि क्लेशैः, केवलं परिभूयते ॥ १९६ ॥
अशान्तस्य कुतो ज्ञान-मज्ञानस्य कुतः सुखम् ।
असुखस्य कुतः स्थैर्य-मस्थिरस्य कुतो गतिः ॥ १९७ ॥
गतिहीननरो याति, नीचयोनिमनिच्छया ।
तत्राऽपि निन्द्यकर्माणि, कृत्वा पापच्यते ऽवशः ॥ १९८ ॥
अपूर्णः पूर्णताहेतो-र्यतते नित्यमुद्यतः ।
प्रतिपच्चन्द्रदृष्टान्तं, ज्ञातव्यं तत्र कोविदैः ॥ १९९ ॥
गुणदृष्टिः सदाशस्या, विपरीतक्रमाऽन्यथा ।
सज्जनाननसंभूता, सुवर्णश्रेणिरीदृशी ॥ २०० ॥
परोत्कर्षमनुश्रुत्य, मोदन्ते विमलाशयाः ।
पङ्कजामोदमुत्कृष्टं, संप्राप्य को न हृष्यति ॥ २०१ ॥
साधवः स्वगुणैः सर्वे, पूज्यन्ते गुणिभिः सदा ।
रत्नानि यदि न स्युश्चेत्, तत्परीक्षा कथं भवेत् ॥२०२॥
यदि सन्ति गुणा नृणां, प्रकाशं यान्ति ते स्वयम् ।
विभावसुर्निरावर्णः, स्वयमेवप्रकाशते ॥ २०३ ॥

गुणिनो यत्र राजन्ते, तत्र स्युः सर्वसंपदः ।
निर्मूला विपदस्तत्र, सर्वकार्यविबाधिकाः ॥ २०४ ॥

विपदां पदमाचख्यु–र्दुर्जनानां समन्वयम् ।
देशत्यागो वरीयान्हि, न तु दुर्जनसंगतिः ॥ २०५ ॥

वरं वनचरैर्वासो,–गहने गिरिकानने ।
प्राणत्यागो वरं नैव, दुर्जनानां समागमः ॥ २०६ ॥

दुर्जनोरगयोर्मध्ये, वरं नागो न दुर्जनः ।
अहिर्दशति कालेन, दुर्जनस्तुपदे पदे ॥ २०७ ॥

दुर्जनो दूरतस्त्याज्यो–वावदूकोऽपि कोपकृत्।
शीतलस्तुहिनौघः किं, नाखिलं दहति क्षणात् ॥२०८॥

दुर्जनेन समं सख्यं, क्वापि न स्यात्सुखावहम् ।
मर्कटेन हतो भूपः, पश्चात्तापमुपेयिवान ॥ २०९ ॥

दुर्जनेषु कृता मैत्री, विषमाऽऽपत्तिदायिनी ।
कपिकच्छुविमर्देन, कुतो नेत्रनिमीलनम् ॥ २१० ॥

दुर्जनेन समं वासो–विविधव्यसनप्रदः ।
राहोश्छायां गते भानौ, नीलिमा किं न दृश्यते ॥२११ ॥

दुर्जनेन समं वादो–नैव कार्यो विचक्षणैः ।
वाणीमात्रप्रहारेण, सतां संजीवनं कुतः ॥ २१२ ॥

यद्देशं दुर्जनो याति, स देशः परिभूयते ।
उदये धूम्रकेतोर्हि, कुतो मङ्गलसन्ततिः ॥ २१३ ॥

दुर्जनो नम्रतां याति, नैव नित्योपसेवितः ।
तैलाभ्यङ्गाद्युपायेन, श्वपुच्छः प्रकृतिं श्रितः ॥ २१४ ॥

दुर्जनः प्रथमं वन्द्यः, सज्जनस्तदनन्तरम् ।
अशुचिक्षालनं पूर्वं, पश्चान्मुखविशोधनम् ॥ २१५ ॥

आडम्बरेण पूज्यन्ते, दुर्जना विगुणा अपि ।
वाराङ्गनाः सुनेपथ्य-प्रभावेण यथा जने ॥ २१६ ॥

दुर्जना दयया हीना-विघ्नराशिप्रियाः सदा ।
कण्टकानां स्वभावो हि, परदुःखविधायकः ॥२१७॥

जानताऽजानता वाऽपि, नैव दुर्जनसंगतिः ।
विधातव्या विचित्राणां, विपदां निधिरन्वहम् २१८॥

दुर्जनाऽनिलवेगेन, सज्जनामरपादपाः ।
नम्रीभूता अपि क्षोभं, नैव यान्ति कदाचन ॥ २१९ ॥

दुर्जनाऽनलसंताप--स्तावल्लोकभयङ्करः ।
सज्जनाऽम्बुधरोयाव--न्नैव दृष्टिपथं गतः ॥ २२० ॥

दुर्जनोलूकवर्गोऽयं, तमस्विन्यां प्रमोदभाक् ।
सज्जनोष्णांशुमाहात्म्या--त्क्वापि शीघ्रं निलीयते ॥२२१॥

दुर्जनानां द्विकानां च, किमप्यन्तरमस्तिनो ।
उभयेऽमेध्यवस्तूनां, पक्षकारानिरन्तरम् ॥ २२२ ॥

वदनं दुर्जनानां वै, दुर्गुणैर्वासितं सदा ।
तस्मात्सुगन्धभावस्तु, कुतो लभ्येत मानवैः॥ २२३ ॥

गुणिनां सङ्गतिः शस्या, सर्वसंपत्तिदायिनी ।
वाक्पतिसङ्गमात्रेण, के ग्रहा न फलप्रदाः ॥ २२४ ॥

गुणवन्तः सदा मान--मर्हन्ति बुधसंसदि ।
कीरोऽपि सूक्तिमात्रेण, पञ्जरस्थो विराजते ॥ २२५ ॥

गुणिनां गुणलेशोऽपि, महोपकारकारकः ।
तृणजन्यो यथा वह्नि--र्महापाकाय जायते ॥ २२६ ॥

गुणिभिः सह संपर्को--जडानां जडतापहः ।
सहस्रकिरणस्पर्श--स्तादृशः किं न दृश्यते ॥ २२७॥

गुणिनां गणना स्वल्पा, प्रत्यक्षैव विभाव्यते ।
खरसंख्याऽधिकालोके, क्वचिदेव गजाधिपाः ॥२२८॥

असाराणां पदार्थानां, भूयानाडम्बरो मतः ।
कांस्यपात्रसमो नादो--हिरण्यभाजने किमु ॥२२९॥

सत्त्वहीना हि गर्जन्ति, पराभिभववाञ्छया ।
ग्रामसिंहवदासन्ना--हस्तिनो मुखराः किमु ॥२३०॥

निःसत्त्वानां समाजोऽपि, जायते कार्यसाधकः ।
आमतन्तुप्रयोगेण, बध्यन्ते मत्तदन्तिनः ॥ २३१ ॥

दुःखहेतुमयं स्नेहं, रसं व्याधिप्रदायकम् ।
लोभमूलं महापापं, त्यक्त्वैतत्सुखभाग्भव ॥२३२॥

धनिनो धनलाभेन, गतमायुर्न जानते ।
क्रमेलकोष्ठलुब्धो हि, जम्बुकोभ्रमणाद्यथा ॥२३३॥

लोभिनः किं न कुर्वन्ति, हेयाऽहेयपराङ्मुखाः ।
द्रौणिश्चिच्छेद पश्चानां, शिरांसि द्रौपदीभुवाम् ॥२३४॥

लोभेन बुद्धिनाशः स्या-न्निर्बुद्धेस्तुकुतो धनम् ।
अन्तरेणाऽक्षियोगेन, दर्पणः किं करिष्यति ॥२३५॥

लुब्धा नराः स्वकार्याय, यतन्ते दुर्गुणालयाः ।
वायसाः किं न दृश्यन्ते, रटन्तः कटुकध्वनि ॥२३६॥

लोभाद्वैरी परो नास्ति, लोभएव महामयः ।
लोभचेटकसंक्रान्तः, प्रत्यहं पीड्यते नरः ॥ २३७ ॥

नरो लोभधिया ग्रस्तो--जननीं जनकं तथा ।
भ्रातरं सुहृदश्चाऽपि, वञ्चयत्यविचारतः ॥२३८॥

महाग्रहस्वरूपोऽयं, लोभी लोकप्रतापकः ॥
आद्योदूरस्थितः सद्यः, प्रत्यक्षोऽन्यः कथं हहा ॥२३९॥

लुब्धस्य चेष्टितं चित्रं, क्रियाकाण्डस्तु मोहकः ।
वाग्वैशद्यं मनोहारि, वक्रता प्राणहारिणी ॥ २४० ॥

केन सृष्टमिदं रत्नं, लोभनामकमुत्कटम् ।
संगतो यद्वशं जन्तु,–र्जडरूपो भवत्यहो ॥२४१॥

लोभाग्नौ निपतन्त्येव, शलभा इव देहिनः ।
मूढता हेतुरत्रैवा,–ऽन्यथा तत्संगतिः कथम् ॥ २४२ ॥

लुब्धा नरा न पश्यन्ति, कामिन इव मोहतः ।
इहैव दुःखिता यान्ति, नरकालयमुत्कटम् ॥ २४३ ॥

वेदनाव्यथिता लुब्धाः, स्वार्थभ्रष्टाः पदे पदे ।
केवलव्याधिवेदिन्यो–न दृष्टाः सरघाः किमु ॥ २४४ ॥

वित्तानां रक्षणे यत्नं, कुर्वन्ति कृपणा जनाः ।
भुञ्जते ददते नैव, केवलं व्ययगामि यत् ॥ २४५ ॥

सुलभः सर्वदा लोके, समवायो विरोधिनाम् ।
ओतुमुषकसङ्गो हि, प्रतिवेश्म विलोक्यते ॥ २४६ ॥

दुर्लभः सुतरां सारः, सज्जानां समागमः ।
कमलाऽऽवासितं वारि, क्वचिदेव समीक्ष्यते ॥ २४७ ॥

भव्या भवन्ति भूतानां, नितरां शान्तिदायकाः ।
सौम्या ग्रहा निषेवन्ते, क्रूरतां न कदाचन॥ २४८ ॥

अभव्यानां समारम्भः, परकार्यविरोधकः ।
नीचस्थानं गते भौमे, कुतः स्यात्सुखवेदनम् ॥ २४९ ॥

निन्दनीयतमं लोके, कुत्सितानां विचेष्टनम् ।
यद्वशे पतितो देही, पङ्के गौरिव सीदति ॥ २५० ॥

दुष्टानां चरितं वक्रं, खला एव विजानते ।
भुजङ्गानां पदारोहं, विदन्ति भुजगाः सखे ॥ २५१ ॥

खलसंसर्गतो ज्ञानं, समूलं हि विनश्यति ।
राहुच्छायागतो दृष्टो, निस्तेजाः शशभृन्न किम् ॥ २५२ ॥

मायाविनो विकाराय, प्रभवन्ति न शान्तये ।
आत्मगुप्तप्रयोगेण, कूर्दन्ति कपयो यथा ॥ २५३ ॥

दुर्जनानां वचो मिष्टं, जायते जीवितापहम् ।
शर्कराभक्षिणो नूनं, खराः प्राणपराङ्मुखाः ॥ २५४ ॥

असदर्थग्रहेणैव, सदर्थो नैव लभ्यते ।
विक्रीते काचखण्डेऽपि, रत्नमूल्यं सुदुर्लभम् ॥ २५५ ॥

साधवः स्वसदाचारं, त्यजन्ति संकटेऽपि नो ।
पयोदैरावृतस्याऽपि, तिग्मरश्मेः सदागतिः ॥ २५६ ॥

परार्थसाधकाः सन्तः, पर्यटन्ति दयालवः ।
राहुणा ग्रस्यमानोऽपि, चन्द्रश्चरति निर्भयः ॥ २५७ ॥

महान्तो नैव मुञ्चन्ति; तुङ्गतां स्वकुलोचिताम् ।
व्यसनैर्बाधिताः सिंहा-स्तृणं नादन्ति कर्हिचित् ॥२५८॥

मानिनो मानमर्हन्ति, यत्र कुत्र गता अपि ।
दन्तिनःस्थानतो भ्रष्टा-बध्यन्ते राजवेश्मनि ॥ २५९ ॥

मानहीनास्तृणायन्ते, पराभूताः पदे पदे ।
दृश्यतां दास्यभावेन, दुर्गता देहिनो भुवि ॥ २६० ॥

विरमन्ति पराभूता,-दुर्जना दुष्टकार्यतः ।
पिशाचा यन्त्रपाशेन, निबध्यन्ते न किं खलु ॥ २६१ ॥

रिक्तभावा अपि क्लेशं, जनयन्ति खला जने ।
घटीयन्त्रस्थिता घट्यः, किमु तं खेदयन्ति नो ॥ २६२ ॥

कुरूपस्थायिनो यान्ति, गुणा गौरवहेतुताम् ।
वसन्तोदयमात्रात्किं, कलकण्ठा न मोहकाः ॥ २६३ ॥

शोभतेऽवसरे पुंसां, प्रभूतोऽपि गुणोदयः ।
जलदागमकालेऽपि, नाऽतिवृष्टिः फलप्रदा ॥ २६४ ॥

वचनं कालमासाद्य, शोभतेऽपि गुणोज्झितम् ।
प्रयाणावसरे वामे, खरशब्दः प्रशस्यते ॥ २६५ ॥

वागीशोऽपिब्रुवन्याति, लघुतां कालमस्मरन् ।
शरन्मेघध्वनिः किं न, निन्दाभाजनमुच्यते ॥ २६६ ॥

मूर्खाणां वादलेशोऽपि, जायते भयदायकः ।
शुष्कवंशसमद्भूतो–ज्वलनोऽरण्यदाहकः ॥ २६७ ॥
बलवानपि सत्पक्षो–जायते कार्यसाधकः ।
प्रभञ्जनेन संत्यक्तो–निर्बलो हि धनञ्जयः ॥ २६८ ॥
निर्बलोऽपिजनव्रातः–पूज्यते कार्यकर्मणि ।
किटिकासंहतिः किं न, शस्यते कार्यसाधिका ॥२६९॥
बहिःसारोपि नो मान्यो–हृदिस्याच्चेदसारता ।
किं प्रीतिपूरकं सद्भि–र्बदरीफलमीक्ष्यते ॥ २७० ॥
अन्तःसारतया लोके, पूज्यन्ते गुणशालिनः ।
नालिकेरफलान्यत्र, शुभाय न मतानि किम् ॥ २७१ ॥
संपदाढ्योऽपि नो मान–मर्हति दानमन्तरा ।
उच्चैः पदं पयोदाना–मम्बुधीनामधः स्थितिः ॥२७२॥
किं करोति गुणाढ्योऽपि, विभवेऽसतिमानवः ।
गुणहीनानि पुष्पाणि, वक्षोजौ भूषयन्ति नो ॥२७३॥
गुणज्ञेषु गुणा यान्ति, गौरवं लोकविश्रुतम् ।
पिकनादमपेक्षन्ते, पञ्चमध्वनिवेदिनः ॥ २७४ ॥
गुणा अपि समाश्रित्य, निर्गुणान्दोषकारिणः ।
मिष्टापगाः समुद्रान्तः, पतिताः क्षारजीवनाः ॥ २७५ ॥

खलसंसर्गतः सन्तो–नैव दुष्यन्ति कर्हिचित् ।
पिचुमन्दप्रसङ्गेन, रसालादूषिताः किमु ॥ २७६ ॥
सतांसंगति मात्रेण, भवेयुर्गुणिनोऽगुणाः ।
पयोदेनो द्धृतंवारि, सामुद्रं किं न तृप्तिदम् ॥ २७७ ॥
नादेन मोहितं विश्व–मकृत्यमपि सेवते ।
तृणभक्षीमृगः किं न, तिष्ठति लुब्धकान्तिके ॥ २७८ ॥
द्विषतामुपकारेण,सज्जनत्वं प्रकाशते ।
महौषधिर्न किं दृष्टा, छेदकानां सुखप्रदा ॥ २७९ ॥
सज्जनानां सदा साम्यं, मतं सर्वत्र जन्तुषु ।
निशाकरप्रकाशो हि, सर्वत्र वर्त्तते समः ॥ २८० ॥
नाऽकार्यं क्रियते सद्भिः, संकटे पतितैरपि ।
निशाकरांशुभिः कश्चि–त्तप्यते शीलवान् किमु ॥ २८१ ॥
अन्धेन नीयमानोऽन्धो–नैवाप्नोति निजोचितम् ।
मूर्खमार्गानुसारी किं, प्रयाति परमं पदम् ॥ २८२ ॥
सद्गुरुनावमासाद्य, तरन्ति विबुधा जनाः ।
न हि जन्मप्रभावेण, केषाञ्चिदुद्धृतिः स्मृता ॥ २८३ ॥
गुरूणां वचनं शस्यं, सर्वपापप्रणाशनम् ।
तदेव भेषजं शान्ति–प्रदं सद्वैद्ययोजितम् ॥ २८४ ॥

प्रज्ञाहीननरे शास्त्रं, नाकिञ्चिदुपकारकृत् ।
लोचनाभ्यां विहीनस्य, दर्पणः श्रमवेदना ॥ २८५ ॥

कोमलं हृदयं यस्य, कठोरं बाह्यवेष्टनम् ।
सनरो जनमान्येषु, नालिकेरफलायते ॥ २८६ ॥

प्रागेव कातराः कार्यं, नारभन्ते यथोचितम् ।
हरिणाः क्वापि नो दृष्टा-गृहारम्भश्रमोद्यताः ॥ २८७ ॥

न मेधा वञ्चकानांस्या-त्परोपकृतिसाधिका ।
धूर्त्तेन पङ्कमार्गेण, क्रोष्टुना निहतो गजः ॥ २८८ ॥

योषितः किं न कुर्वन्ति, मायावासितचेतसः ।
दृश्यतां संगमात्रेण, मुनयोऽपि प्रतारिताः ॥ २८९ ॥

कूटागारमहोयोधि-स्तार्यते केन देहिना ।
साहसं षड्गुणं प्रोक्तं, बुद्धिस्तस्याश्चतुर्गुणा ॥ २९० ॥

संपन्नशीलमाहात्म्या, सा नारी नररत्नसूः ।
वन्दनीया सतीनां या, शिरोरत्नमयी सदा ॥ २९१ ॥

विदुषां गोपनं किञ्चि-न्नैवाऽस्ति भुवनत्रये ।
विभावसुर्निजं तेजः किं गोपयति कर्हिचित् ॥ २९२ ॥

कामिनीनां प्रसंगो हि, दुर्दशां जनयत्यहो ।
तस्मात्तं दूरतस्त्यक्त्वा, शिववर्त्मपरो भव ॥ २९३ ॥

पक्षपातरतोदेवो-न दृष्टो न श्रुतोऽपि वा ।
तथाऽपि देवतोद्देशं, विधायोद्धतसंगतिः ॥ २९४ ॥
कर्मणा जायते जन्तुः, कर्मणा प्रविलीयते ।
तस्मात्कर्मप्रधानेयं, विधातुः सृष्टिरुच्यते ॥ २९५ ॥
नीतिमात्रमपिक्षोभ्यं, वचनं किमु जल्पितम् ।
सर्वधर्ममयं लोके, पूजनीयमनर्थदम् ॥ २९६ ॥
अजडो जडमेव निन्दति, सुसती निन्दति कामिनीं कुशीलाम् ।
सुजनोऽतितरां कुमार्गगं, भिषजां निन्द्यतमो निरामयः२९७
करुणा जनमानसस्थिता, सुखदा साधुजनेन संमता ।
कलुषं हृदयं विनिर्मितं, परलोकेऽप्यरतिप्रदं मतम् ॥२९८॥
विवादेषु रताः केचि-त्पर्यटन्ति जनान्तिके ।
तत्त्वबुद्धिरताः स्तोका-दृश्यन्ते विगतक्लमाः ॥ २९९ ॥
सारमात्रमपिग्राह्यं, वचनं बालभाषितम् ।
गुणग्राह्याः कुतो लुब्धा-विशेषवक्तृमानवे ॥ ३०० ॥
गुणएव सदा ग्राह्यो-यत्र कुत्र स्थितोऽपि वा ।
गुणेन शस्यते देही, न तु जातिप्रभावतः ॥ ३०१ ॥
गुणिनां सङ्गमात्रेण, जडोऽपि बुद्धिमान् भवेत् ।
गुणहीनो धनुर्दण्डो, निष्फलः साध्यसाधने ॥ ३०२ ॥

सर्वस्वदायिनो नित्यं, निर्ममत्त्वविराजिताः ।
अलङ्कारमया लोके, पूज्यन्ते गुणिसंगमे ॥ ३०३ ॥
गुणिनां सङ्गतिः श्रेष्ठा, परलोकसुखप्रदा ।
इहाऽपि विदुषां मान्या, कोऽजडस्तां परित्यजेत् ॥ ३०४ ॥
गुणेषु मित्रता कार्या, सर्वत्र विजयप्रदा ।
तस्याः सङ्गति मात्रेण, जनो याति परं पदम् ॥ ३०५ ॥
गुणानां कीर्त्तनं श्रेष्ठं, विशुद्धबुद्धिदायिनाम् ।
विरामो दुर्गुणेभ्यस्तु, जनानां तारकः स्मृतः ॥ ३०६ ॥
निर्भया निःस्पृहाकारा–येषां बुद्धिः सुनिर्मला ।
ते नरा गुणवन्मान्या--जनानन्दप्रदायिनः ॥ ३०७ ॥
कीर्त्तनं देवदेवस्य, गुणानामात्मसिद्धये ।
आत्मसिद्धिसमं कार्यं, विद्यते नाऽन्यदुत्तमम् ॥ ३०८ ॥
प्रायेण हि वियुज्यन्ते, सिद्धे स्वार्थेऽखिलाजनाः ।
कर्मग्रन्थौ क्षयं याते, न कोऽप्यात्माऽत्रतिष्ठति ॥ ३०९ ॥
मुकुरो मलनिर्मुक्तः, प्रतिबिम्बप्रकाशकः ।
तस्मान्निर्मलभावेन, वर्त्तितव्यं सदा बुधैः ॥ ३१० ॥
यदि वन्ध्या सुतं सूते, क्षारभूमिश्च पङ्कजम् ।
तदा दुर्जनसंसर्गो-जनयेच्छोभनाक्रियाम् ॥ ३११ ॥

खलानाञ्च भुजङ्गानां, गतिवैषम्यमुत्कटम् ।
भुजगोदशति क्वापि, प्रथमस्तु पदे पदे ॥ ३१२ ॥

समयोचितकार्याणि, यो विहन्ति प्रमादतः ।
सविमूढमतिर्लोके, सर्वत्र परिभूयते ॥ ३१३ ॥

आत्मोन्नतिंपरित्यज्य, परमाणजिहीर्षया ।
यतते सर्वदा योऽसौ, प्रयाति विपदां पदम् ॥ ३१४ ॥

माननीयोऽपि भूपालो, नीतिहीनो ऽवमन्यते ।
तस्मान्नीतिमता भाव्यं, जनेन हितवाञ्छया ॥ ३१५ ॥

मैनिका दुःखिताः सर्वे, व्याधाश्च पीडिता भृशम् ।
कारणन्त्वत्र हिंसैव, तस्मात्तां सर्वथा त्यजेत् ॥ ३१६ ॥

दुःखमूलानि पापानि, ज्ञात्वेति मतिमान्नरः ।
शर्ममूलानि पुण्यानि, विचेतुं यततेऽञ्जसा ॥ ३१७ ॥

मनोरथा न सिद्ध्यन्ति, निरुद्योगतया क्वचित् ।
क्रियारम्भं विना कूपा-ज्जलबिन्दुर्न लभ्यते ॥ ३१८ ॥

विषमं हि विषं प्रोक्तं, दुर्जनानां वचस्ततः ।
अतीवविषमं तस्मा-द्विषं वरतरं मतम् ॥ ३१९ ॥

यत्र प्रोक्तं वचो व्यर्थं, मौनं तत्र सुखावहम् ।
प्रयत्नेन विना सिद्धिः, सुलभा युक्तवेदिनाम् ॥ ३२० ॥

त्रिवर्गसाधनं येन, साधितं लोकसंस्तुतम् ।
तस्य क्षतिर्न लोकेऽस्मि-न्परत्र सुखमाप्नुयात् ॥ ३२१ ॥
विकृतं मानसं यस्य, निर्दयं मदमेदुरम् ।
तदुरीकृतसिद्धिस्तु, कुतः स्यात्पापवर्द्धिनी ॥ ३२२ ॥
तपसा जायते सिद्धिः, परमार्थविधायिनी ।
विना तेन जनिर्लोके, निन्दनीतमा मता ॥ ३२३ ॥
व्रतेन तपसा किंवा, यदि भव्यतरं मनः ।
मनः शुद्ध्या कृतं सर्वं, फलत्येव न संशयः ॥ ३२४ ॥
मोहनिद्रावशं यातं, जगदेतच्चराचरम् ।
तत्प्रतिबोधनायैव, सद्गुरोः संगतिः स्मृता ॥ ३२५ ॥
चित्तं विशोधयत्याशु, मानं दिशति सत्वरम् ।
कीर्त्तिप्रसारयत्युच्चैः, सतां संगतिरुज्ज्वला ॥ ३२६ ॥
निवर्त्तयति पापानि, विपत्तिं दलयत्यलम् ।
विस्तारयति शर्माणि, सतां संगतिरद्भुता ॥ ३२७ ॥
वीरा विक्रममिच्छन्ति, धीराः स्थिरत्वमात्मनः ।
योगिनोऽनल्पवैराग्यं, गुणिनो गुणसन्ततिम् ॥ ३२८ ॥
विकुर्वते विषादार्त्ता–अधमा धनवाञ्छया ।
न जानते तदेकं हि, कुनियोगेन दुःखदम् ॥ ३२९ ॥

सुविचारपयोराशौ, मज्जिताः शुद्धिमत्तराः ।
दुर्ध्यानपङ्कसंसर्गो-नीवितव्यापहः सदा ॥ ३३० ॥

निश्चयेन सदा मान्यो, गुणदो गुणिसङ्गमः ।
नितरानन्ददानेन, शस्यते हि स केवलम् ॥ ३३१ ॥

सद्गुणालंकृत मान्या,-यथाविद्वत्समागमे ।
सुवर्णमणिभूषाभि-र्नतथाऽर्हन्तिपूज्यताम् ॥ ३३२ ॥

अविचार्य कृतं कार्यं, परिणामसुखाऽपहम् ।
सुधियामपिसामर्थ्यं, कुतो निर्बुद्धिवर्त्मनि ॥ ३३३ ॥

न कुलं कुलमित्याहुः, सद्गुणालङ्कृतं हि तत् ।
निर्गुणा पुष्पसंपत्तिः, सर्वथा त्यज्यते जनैः ॥ ३३४ ॥

निदानं सर्वसंपत्ते-र्विनयो विदुषांमतः ।
स एव सर्वदा सेव्यो--ऽनेकशर्मविधायकः ॥ ३३५ ॥

गुणानां गौरव लोके, गण्यते गुणिमानवैः ।
निर्गुणा लघुतां यान्ति, धनुर्यष्टिगणा यथा ॥ ३३६ ॥

वयसा वृद्धभावानां, गणना क्रियते जनैः ।
संख्यामात्रं फलं तेषां, कार्यसिद्धिस्तु दुर्लभा ॥ ३३७ ॥

केवलं गुणसंपत्त्या, जयन्त्येव जिजीषवः ।
किमन्येन धनुःसारो, यो विजेता बलाऽन्वितः ॥ ३३८ ॥

येनिघ्नन्ति निजाञ्छत्रून्, प्रभूतबलसंपदा ।
गुणेनैकेन शान्तेन, स्वयं शाम्यन्ति ते क्षणात् ॥ ३३९ ॥
वैरिवारोऽधिको लोके, तीव्रसंतापदायकः ।
तं विजित्य पुरा बुद्ध्या, शान्तवृत्तिपरो भवेत् ॥ ३४० ॥
सभये भवपाथोधौ, पतितोऽपि नराधमः ।
पाषाणखण्डमाश्रित्य, तर्त्तुमिच्छति किल्बिषम् ॥३४१॥
गुणतन्तुसमाकृष्टो, यावद्भवति मानवः ।
तावन्नदुर्गतौ गर्त्ते, पतत्येव भयालये ॥ ३४२ ॥
परस्परानुरागेण, वर्द्धन्ते देहिनां मुदः ।
क्लेशसन्तानबीजं हि, चेतसो भिन्नभावना ॥ ३४३ ॥
नृपतेर्जनतायाश्चा-द्वैतभावोऽर्थसाधकः ।
न तं विना समर्थोऽसौ, विधातुं स्वल्पमप्यहो ॥ ३४४ ॥
असहायोऽपि सत्त्वात्मा-नैवकार्यप्रसाधकः ।
ज्वलन्नपि दवाग्निर्हि, विना वातेन शाम्यति ॥ ३४५ ॥
कार्यकारणसंभूतं, जगदेतच्चराचरम् ।
कारणं गुणमित्याहु-स्तस्मादेतं समाचर ॥ ३४६ ॥
गुणकोटीं समासाद्य, ज्ञानतत्त्वविचक्षणाः ।
स्वपरार्थविभेदेन, कार्यसाधनशक्तयः ॥ ३४७ ॥

परोपदेशका लोके, विद्यन्ते बहवो जनाः ।
परार्थसाधकास्तोका,–वीक्ष्यन्ते तत्त्ववेदिनः ॥ ३४८ ॥

ज्ञानाऽऽडम्बरिभिर्मूर्खै–र्वेष्टितं भूमिमण्डलम् ।
गतानुगतिमांल्लोको--वस्तुतत्त्वपराङ्मुखः ॥ ३४९ ॥

नेता यस्य भवेदन्धो–निर्विघ्नगतिकः कथम् ।
दृश्यतां धार्त्तराष्ट्राणां, स्थितिर्विषमवेदिनाम् ॥ ३५० ॥

कलिना हन्यमानानां, कुतो बुद्धिर्हि निर्मला ।
श्रुताभ्यासपराणांसा, संभवेद्दोषमर्दिनी ॥ ३५१ ॥

अज्ञानां संसदि क्षुद्रो,--ज्ञानहीनोऽपि पूज्यते ।
काकपङ्क्तौ कथं हंसो–लभते ख्यातिमात्मनः ॥३५२॥

द्विष्टो यद्यपि विज्ञानां, गुणवान्संमतो बुधैः ।
निर्गुणोऽपि जनो मान्यो, भुवि मातृमुखैः सदा ॥३५३॥

परप्रतारणा येन, क्रियते वैरवर्द्धिनी ।
सोऽपि पूज्यपदं याति, वाञ्छा फलति निश्चला ॥३५४॥

जनयन्परपीडांयो–यशसे यतते सदा ।
स विनश्यति निन्द्यात्मा, काकनाशमकार्यतः ॥३५५॥

येन मानस्पृहाऽकारि, विनष्टः सेति निश्चितम् ।
तस्मान्मानपरीहारः, कर्त्तव्यो भूतिमिच्छता ॥ ३५६ ॥

मानहस्तिसमारूढः, पतत्येवाऽविचारतः ।
न स्यादात्मसुखं किञ्चि-दिहाऽमुत्र हितप्रदम् ॥३५७॥
अविचार्यकृतं कार्यं, जनयेदहितं सदा ।
तन्मूलमेव मानः स्या-त्तस्मात्तं दूरतस्त्यजेत् ॥ ३५८ ॥
पापमूलानि कार्याणि, हेयानि दूरतो बुधैः ।
न तानि जानतेऽविज्ञा,-हेयाऽहेयपराङ्मुखाः ॥३५९॥
सेवाधर्मोऽतिसन्मान्यो-जनानां सुखदो यदि ।
दुःखदश्चेत्कथंलोके, पूज्यभावमवाप्नुयात् ॥ ३६० ॥
उच्चनीचप्रभावस्तु, सर्वत्र नियतःस्थितः ।
तारतम्याविभेदेषु, स्थिता कर्मप्रधानता ॥ ३६१ ॥
नीचोच्चकर्मसंभूता, स्पृश्याऽस्पृश्यविभेदता ।
अनादिकालतो जाता, सा केनैव निवार्यते ॥ ३६२ ॥
नीचकर्मप्रभावेण, जायतेऽस्पृश्यभावना ।
उदारचरितानांहि,-स्वतःसिद्धोच्चभावना ॥ ३६३ ॥
उत्तमानां चरित्राणि, वरीयांसि स्वभावतः ।
अशुद्धचरितानां हि, नीचकुले जनिर्मता ॥ ३६४ ॥
अनार्याणां कुले जातो--नैवार्यो भवति क्वचित् ।
शतशो देशितः काको--न पवित्रक्रियारतः ॥ ३६५ ॥

मांसाशी बोध्यमानोऽपि, न जहाति निजां क्रियाम् ।
व्यसनं दुस्त्यजं लोके,-व्यसनैकसमाजुषाम् ॥ ३६६ ॥

सतां संगतिमात्रेण, दुर्जनोऽपि गुणीभवेत् ।
अज्ञानदुर्विदग्धानां, सत्सङ्गोऽपि निरर्थकः ॥ ३६७ ॥

कदाग्रहग्रहग्रस्ता,-न विदन्ति हिताऽहितम् ।
तन्मार्गयायिनो मुग्धा--धर्मभ्रष्टाः कुतो जनाः ॥३६८॥

कुशीलत्वं समासाद्य, कथं धर्मप्रचारणा ।
धर्माभावेऽर्थकामीया, दुर्लभा सिद्धिरन्वहम् ॥ ३६९ ॥

विचारसारणी यस्य, चेतोभूम्यां वहेत्सदा ।
रसवत्तरवस्तत्र, फलन्तिविधिवत्सदा ॥ ३७० ॥

कर्मपाशदृढाबद्धा,-भ्रमन्ति परितो जनाः ।
कर्मपाशविनिर्मुक्ता--निर्वृत्तिं यान्ति सत्वरम् ॥ ३७१ ॥

क्षीणकर्मा जनो लोके, परानुद्धर्तुमीश्वरः ।
स्वयमश्मसमोभोगी, ब्रुडत्येव भवोदधौ ॥ ३७२ ॥

अङ्गहीनो नरो लोके, शोभते धर्मतत्परः ।
साङ्गभूषोऽपिनिःसारो,--धर्महीनो न राजते ॥ ३७३ ॥

कौटिल्यं केवलानीतिः, संमताऽधर्मिणां सदा ।
न्यायव्याजेन मुष्णन्ति, प्रपञ्चबहुलाजनाः ॥ ३७४ ॥

कामितानि न सिद्ध्यन्ति, कुटिलानां मनस्विनाम् ।
अन्यथा जीवनं नृणां, सरलानां कथं भवेत् ॥ ३७५ ॥
करुणाशालिनां पुंसां, जीवनं संमतं वरम् ।
निर्दयानां मृतिःशस्या, परपीडापकारिणी ॥ ३७६ ॥
कालक्रमप्रभावेण, निर्दयास्तु पदे पदे ।
दृश्यन्ते विरला लोके, दयावासितमानसाः ॥ ३७७ ॥
दुर्लभा इष्टकार्याणां, साधकाः सत्यवेदिनः ।
अनिष्टकारिणस्त्वत्र, बहवो दृष्टिरोधकाः ॥ ३७८ ॥
न बलं बलमित्याहु-र्बलमात्मसमुद्भवम् ।
तेनैव कार्यसंसिद्धिः, सुतरां समुदाहृता ॥ ३७९ ॥
शरदिन्दुसमाकारा, शेमुषी यस्य दीप्यते ।
तं नरं नैव बाधेत, तामिस्रा मोहरूपिणी ॥३८० ॥
विवेकशांभवीशक्ति--श्चित्तसद्मनि संस्थिता ।
कन्दर्पदर्पसंहर्त्री, स नरो यस्य गीयते ॥ ३८१ ॥
विवेकविकला द्वेषं, वहन्ति यत्र तत्र वै ।
विवेकेन विना तेषां, जातं जन्मनिरर्थकम् ॥ ३८२ ॥
विवेकिनोऽपिदुर्ध्याना-द्व्रजन्ति कुपथं नराः ।
कथं सुमार्गसंचारो,-बुद्धिः कर्मानुसारिणी ॥ ३८३ ॥

विचिन्वन्ति बुधा धर्मं, ततः सत्यव्यवस्थितिः ।
तथैव पूज्यता सुलभा, सा तु लोके सुदुर्लभा ॥ ३८४ ॥
तत्त्ववेदिनरो लोके, माननीयो वचस्विभिः ।
तन्मार्गयायिनां पुंसां, न किञ्चिदवशिष्यते ॥ ३८५ ॥
विवेकनेत्रहीनाना—मपवर्त्मनि जायते ।
स्खलना तत्र कोदोषो—निरालम्बः पतत्यधः ॥ ३८६ ॥
प्रधानं चक्षुरेकं हि, सद्गुरुसंगमाभिधम् ।
तदन्तरा नरो नैव, विजानाति हिताऽहितम् ॥ ३८७ ॥
अचिरेण विवेकाग्नौ, ज्वलिते कामवैरिणः ।
अनिवार्यविपद्राशिं, व्रजन्ति शलभास्थितिम् ॥ ३८८ ॥
विवेकवारिणा सिञ्चे—द्बुद्धिभूरुहमन्वहम् ।
फलानि मधुराण्येव, लभते नाऽत्र संशयः ॥ ३८९ ॥
कियन्त्यभ्यस्य शास्त्राणि, नराः केचिद्विखण्डिताः ।
परबुद्धिप्रकाशेन, बम्भ्रमन्ति भवाटवीम् ॥ ३९० ॥
विपरीतोपदेशेन, सत्फलं नैव लभ्यते ।
नहि निम्बतरुः कश्चि—दाम्रदाने प्रभुर्भवेत् ॥ ३९१ ॥
उपदेशपदं प्राप्य, सफलं मनुते जनुः ।
तदेवाऽविबुधो, निन्दन्, विजहाति सुदूरतः ॥ ३९२ ॥

सुपथ्यमपि सद्वाक्यं, मूर्खेभ्यो नैव रोचते ।
आतङ्कहारि बालानां, द्वेष्यमेवहि भेषजम् ॥ ३९३ ॥

उत्तङ्गपदमासाद्य, माद्यत्यविबुधो जनः ।
अकुलीनोऽधिकारी हि, नैव योग्यक्रियारतः ॥ ३९४ ॥

विवेकान्धाः प्रवर्त्तन्ते, निजदोषाऽनुसारतः ।
सत्प्रवृत्तिः कुतस्तेषां, प्रचण्डक्रोधवर्त्तिनाम् ॥ ३९५ ॥

विकारबहुलाचाराः, परवञ्चनतत्पराः ।
तिरोहितस्वकीयार्थाः, परोपकृतिदर्शकाः ॥ ३९६ ॥

वदनं कोमलाकारं, हृदयं कर्त्रिकानिभम् ।
पापानां सर्वदाप्रोक्तं, विदुषां विपरीतता ॥ ३९७ ॥

अमानित्वमहोलोके, स्वीकृतं येन देहिना ।
किं न लब्धं जनानन्द-दायिना तेन वाग्मिना ॥ ३९८ ॥

गरीयांसमपिक्षुद्र-आत्मसौख्यविधायकम् ।
निजं धर्मं परित्यज्य, परधर्मं निषेवते ॥ ३९९ ॥

धर्मरत्नप्रभावेण, विभूतिं प्रबलां भजन् ।
कदाचिन्नविहन्येत, निष्ठुरैरपि कर्मभिः ॥ ४०० ॥

सद्धर्मनावमाश्रित्य, निजात्महितवाञ्छया ।
भवक्षारोदधेः पारं, प्रयाहि नरपुङ्गव ! ॥ ४०१ ॥

संसाराऽरण्यवासोऽयं–प्रचण्डदुःखदायकः ।
कथं क्लेशमयस्तुभ्यं, रोचते मतिशालिने ॥ ४०२ ॥

अकस्मादागतं दुःखं, विचिन्त्य बुद्धिमान्नरः ।
शोकसागरमवमत्य, प्रमोदाराममाश्रयेत् ॥ ४०३ ॥

अनित्येन शरीरेण, रोगग्रस्तेन नित्यशः ।
यदि स्यात् परकार्यं चे–त्तेन लब्धं भवेन्न किम् ॥४०४॥

परोपकृतये सर्वं, सतां सर्वत्र संमतम् ।
इतरेषान्तु यद्भुक्तं, तदेव सफलं मतम् ॥ ४०५ ॥

नन्दितोऽपि चरेत्पापं, नीचो नीचक्रियारतः ।
वायसो मधुरं भुक्त्वा, ऽमेध्यवस्तु निषेवते ॥ ४०६ ॥

मांसभोजी महादुष्टः, परप्राणापहारकृत् ।
विरूद्धकर्मकारित्वा-न्नरकेषु विपच्यते ॥ ४०७ ॥

सर्वदानेषु सद्दान-मभयं परिचक्ष्यते ।
सर्वदा प्राणिनः सर्वे, समीहन्ते हि जीवनम् ॥४०८॥

मांसमद्यपरित्यागी, मेधते जनसंमतः ।
मेधाविनो न रज्यन्ते, व्यसनेषु कदाचन ॥ ४०९ ॥

वरं विभवहीनोऽपि, न पुनर्व्यसनप्रियः ।
राजते रजनीकान्तो,-लाञ्छितोऽपि कलानिधिः॥४१०॥

गुणवत्सु हि रज्यन्ते, गुणिनो नरपुङ्गवाः ।
द्विरेफा द्विपगण्डेषु, मदलिप्तेषु रागिणः ॥ ४११ ॥
न कर्मणामनारंभा-ज्जनता पापभागिनी ।
साधुसङ्गरतो लोको-नपतत्येव कर्हिचित् ॥ ४१२ ॥
कथंचिद्दक्षतां प्राप्य, दानेषु विरता नराः ।
अधमास्थितिमाश्रित्य, पतन्त्युत्तङ्गभावतः॥ ४१३ ॥
अधमा धनलोभेन, नैव पश्यन्ति दुष्क्रियाम् ।
तस्माल्लोभभटं जित्वा सत्क्रियाराधको भवेत् ॥ ४१४ ॥
हृद्यया विद्यया किं स्या-द्यदि न स्याद्विनम्रता ।
विनयेन वशं याति, जगदेतच्चराचरम् ॥ ४१५ ॥
भव्यानामेव सत्त्वानां, विनयः परिवर्त्तते ।
नैसर्गिको हि सद्भावः, सर्वदा शोभतेतराम् ॥ ४१६ ॥
मानवन्तः सदालोके, पूज्यन्ते नरपुङ्गवाः ।
अधर्मोपहताः क्वाऽपि, नाऽऽद्रियन्ते मनीषिभिः ॥४१७॥
संपत्तौ च विपत्तौ च, विद्वांसः स्वस्थचेतसः ।
सुखदुःखं समं कृत्वा, शेरते शान्तिसद्मनि ॥ ४१८ ॥
सुधियः सत्ययोगेन, तरन्ति भववारिधिम् ।
कामदुर्ग्राहसंक्षुब्धं, विषमं ध्यानसंगताः ॥४१९॥

गुरूणां सन्निधौ क्रोध-स्त्याज्य एव मनीषिभिः ।
क्रोधिनां न भवेत्क्वाऽपि, गुरुसंगतिसत्फलम् ॥ ४२० ॥

मान एव मनुष्याणां, हृदिस्थो गुणभेदकः ।
गुणलुब्धनरेणाशु, परिहार्योऽस्तिदुरतः ॥ ४२१ ॥

मन्मथस्य वशं याती,-मूढतां प्रतिपद्यते ।
विमूढो नैव जानाति, कृत्याऽकृत्यविभेदताम् ॥ ४२२ ॥

मन्मथोग्रग्रहग्रस्तः-यो नरो भ्रान्तमानसः ।
विवेकगुणहीनत्वा,-द्भ्रश्यत्येव पदे पदे ॥ ४२३ ॥

सर्वभूतहितायैव, यश्चरत्यविकल्पतः ।
स तपस्वी व्रती दानी, सैव लोकप्रशस्तिभाक् ॥४२४॥

यथाविधि प्रवर्त्तेत, व्रतदानादिकर्मणि ।
स प्रचण्डकलिं जित्वा, साम्यधर्मधरो भवेत् ॥४२५॥

स्तुतिनिन्दाऽभिभूतात्मा, योनिरीक्षेत मङ्गलम् ।
स क्षारभूमितो वाञ्छ,-त्यचिरेणाऽमरद्रुमम् ॥ ४२६ ॥

समाकर्ण्यानिजांश्लाघां, मोदन्ते नैवसज्जनाः ।
निन्दां चापि समाकर्ण्य, शोकक्लेशविवर्जिताः ॥ ४२७ ॥

शान्तचित्तेन यो वैरि-व्रातंनिर्जयति क्रमात् ।
स पुमान्सर्वदा पूज्यः, समस्तक्षितिमण्डले ॥ ४२८ ॥

निजबुद्धिप्रभावेण, कार्यसिद्धिः प्रजायते ।
परत्रेह च निर्द्वन्द्वः,कृतज्ञः स विशिष्यते ॥ ४२९ ॥

सद्बुद्धिसाधनं विद्वान्समासाद्य सुनिर्भयः ।
जनैराद्रियते सर्वैः, कृपणाः फलहारिताः ॥ ४३० ॥

सदनं गुणराशीनां, मण्डनं सुवचास्विनाम् ।
बुद्धिमान्सुखदो लोके, माननीयो मनीषिभिः ॥ ४३१ ॥

कनीयांसं गुणैर्ज्येष्ठ-मनघं सत्यभूषितम् ।
वचास्विनं सदानन्दं, सेवेत मतिमान्नरः ॥ ४३२ ॥

कार्यदक्षं समानाक्षं, सुलक्षं साधितक्षमम् ।
सत्तत्त्वसाधनाकांक्षं, भजेत सुमतिर्नरः ॥ ४३३ ॥

किं किं न साधयत्यत्र, सेवितामसेवधिः ।
धर्मरत्नगणैर्जुष्टो,–निखिलार्थजलोर्मिकः ॥ ४३४ ॥

मदमोहविमूढात्माऽ, ज्ञानान्धतमसावृतः ।
विना ज्ञानप्रदीपेन, भवान्धौ निपतत्यसौ ॥ ४३५ ॥

ज्ञानाऽलङ्कृतिमाबिभ्र–द्वन्दनीयतमो नृणाम् ।
ज्ञानमेव सदा पूज्यं, भवपाथोधिशोषकम् ॥ ४३६ ॥

द्वारिद्र्यद्रोहकं दानं, स्वपराशयतुष्टिदम् ।
विवेकेन विना नैव, प्रदेयं यत्र कुत्रचित् ॥ ४३७ ॥

सुपात्रनिहितं दानं, स्वल्पमप्यतिशर्मदम् ।
सुक्षेत्रयोजितं बीजं, भूरिलाभाय जायते ॥ ४३८ ॥

कुपात्रकरसंप्राप्तं, जनयेदतिसंकटम् ।
उषरक्षिप्तबीजं हि, केवलं श्रमसाधकम् ॥ ४३९ ॥

सद्भावेन कृतं कार्यं, जायते फलदायकम् ।
विना भावेन संभारः, कार्याणां भारकारकः ॥ ४४० ॥

तरन्ति संकटं क्षिप्रं, भव्या भावपरायणाः ।
निमज्जन्त्यधियस्तस्मिन्-भावसारपराङ्मुखाः ॥४४१॥

भावनामेव सत्कृत्य, द्रौपदी दुःखिता भृशम् ।
प्रमोदाराममापेदे, परिणामसुखार्थिनी ॥ ४४२ ॥

भद्रभावतरण्डेन, दुस्तरं भववारिधिम् ।
तरन्ति क्षणतो भव्या,-जगदानन्ददायकाः ॥ ४४३ ॥

कर्मणा जायते जन्तुः सुखदुःखनिमित्तभाक् ।
कर्मणा च प्रलीयन्ते, दुर्धर्षा आपदोऽखिलाः ॥ ४४४ ॥

कर्ममूलानि भूतानि, स्वस्वमत्यनुसारतः ।
विचेष्टन्ते हि सर्वाणि,विधातुःक्रमईदृशः ॥ ४४५ ॥

न्याय एव सदा पूज्यो-न्यायमूला विभूतयः ।
न्याय एव परं मित्रं, न्यायः सद्रत्नसेवधिः ॥ ४४६ ॥

न्यायचिन्तामणिर्यस्य, मनः सद्मनि राजते ।
सनरो नरमूर्धन्यो–भ्राजतेजनसंस्तुतः ॥ ४४७ ॥

नीतिनौकासमारूढो–मानवोऽनघमानसः ।
विपद्वारिनिधिं सद्य–स्तरत्येव सुदुस्तरम् ॥ ४४८ ॥

नीतिदानमनुत्कृष्टं, ये वदन्ति नरोत्तमाः ।
दुर्लभास्ते जगज्जन्तू–द्धारकाः क्लेशवारकाः ॥ ४४९ ॥

नीतिमन्तः कलावन्तो–विदितास्तत्त्ववेदिनः ।
सत्पक्षनिरता ये च,–मानमर्हन्ति भूतले ॥ ४५० ॥

उपार्जितातिदाक्षिण्या,–न्यायालङ्कारभूषिताः ।
भ्राजन्ते विदुषां मध्ये, विना रत्नविभूषणैः ॥ ४५१ ॥

न्यायनौकाप्रभावेण. दुस्तरापन्महोदधिम् ।
ततार जानकीजानिः, कपिसेनासमन्वितः ॥ ४५२ ॥

बोधितागमतत्त्वार्थः, पौलस्त्योत्रिपदां पदम् ।
प्रययौ सान्वयस्तत्र, हेतुस्त्वन्यायसेवनम् ॥ ४५३ ॥

न्यायेनोपार्जितं वित्तं, चिरं तिष्ठत्यरक्षितम् ।
दानधर्मनियोगेन, सततं वृद्धिकारिणा ॥ ४५४ ॥

अन्यायोपार्जिता संप–दचिरस्थायिनी स्मृता ।
निजोपभगतानैव, तया सिद्ध्यति देहिनाम् ॥ ४५५ ॥

सन्मङ्गलप्रदायिन्यो,–न्यायमूलाः सुसंपदः ।
ताः समासाद्य धर्मज्ञै–र्नियोक्तव्याः सुवर्त्मनि ॥ ४५६ ॥

स्पृश्याऽस्पृश्यविभेदेन, द्विविधो लौकिकक्रमः ।
आद्यः सत्कर्मणा जातो, ह्यसत्कर्मभिरन्तिमः ॥ ४५७ ॥

अन्येऽपि जातिभेदास्तु, ब्राह्मणक्षत्रियादयः ।
गुणकर्मानुसारेण, विश्रुता न तु कल्पिताः ॥ ४५८ ॥

नीचो नीचगुणोत्साही, क्षुद्रकर्मरतः सदा ।
प्रासादशिखरं यातः, काकोमेध्यरतो न किम् ॥४५९॥

दृश्यन्ते बहवः पापाः, स्वच्छवेशधरा नराः ।
मलीनहृदयास्तेषां, स्पृश्यत्वं सुलभं न वै ॥ ४६० ॥

अन्त्यजोऽपि निजौचित्यं, न्यायतो न जहाति चेत् ।
जन्मान्तरे सुजातित्वं, लभते स्पृश्यतायुतम् ॥ ४६१ ॥

उत्तमो यदि लोकेऽस्मि–न्निन्द्यकर्मपरायणः ।
भवान्तरे स हीनत्व–मस्पृश्यत्वञ्च गच्छति ॥ ४६२ ॥

तृष्णाऽर्दितजनोऽजस्रं, पर्यटत्यतिवाञ्छया ।
स्वयं न तृप्तिमायाति, परपीडामनुसृजन् ॥ ४६३ ॥

संतोषाऽमृततृप्ता ये, विदन्ति सुखमुत्कटम् ।
कुतस्तद्धनलुब्धाना–मसन्तोषनिषेविणाम् ॥ ४६४ ॥

परकीयसुखंदृष्ट्वा, यो निजं कर्त्तुमिच्छति।
सुखं तु दुर्लभं मन्ये, सुतरांदुःखसन्ततिः ॥ ४६५ ॥

प्रार्थनादिप्रयोगेण, परद्रव्योपजीविनः ।
असिद्धिः सर्वथा तेषां, परमार्थगतिः कुतः ॥ ४६६ ॥

परस्वेन निजां पुष्टिं, ये चिकीर्षन्ति मानवाः ।
किं तेन सुकृतं लोके, तेषां जन्मनिरर्थकम् ॥ ४६७ ॥

कदम्बेन हृतो राजा, निर्वेदमभिपद्यते ।
तद्वन्नीचजनाऽऽसक्तो–हीयते मानवोधमः ॥ ४६८ ॥

परदाररतो जन्तु–स्त्वशः परिभूयते ।
अवाप्नोत्युभयत्राश–मपमानं पदे पदे ॥ ४६९ ॥

इन्द्रियाग्निपराभूतो–यः शान्तिमभिवाञ्छति ।
कालकूटविषं भुक्त्वा, जीवितेच्छःस दुर्मतिः ॥ ४७० ॥

नाऽभीष्टं लभते जन्तुः, कर्मपाशनियन्त्रितः ।
सुखदुःखं समं कृत्वा, तस्मान्नीतिपरोभव ॥ ४७१ ॥

इष्टं न कस्यचिद्दुःखं, सर्वेषां सुखमीप्सितम् ।
कर्मयन्त्रप्रभावेण, प्राप्यते द्वितयं खलु ॥ ४७२ ॥

न वेत्ति कर्मभूभर्त्तु–र्माहात्म्यं मोहितो जनः ।
कर्मराशिमनुत्सृज्य, कोऽयासीत्परमां गतिम् ॥ ४७३ ॥

कर्मणोत्पद्यते शर्म, कर्मणा च विलीयते ।
तेनैव वर्द्धते पुण्यं, सर्वमूलं हि तत्स्मृतम् ॥ ४७४ ॥

कर्मदोलां समारूढो–यः स्वातन्त्र्यमनर्गलम् ।
समालम्ब्य क्रियां कुर्या–त्स व्रजेत्पारमागसाम् ॥४७५॥

निन्दितोऽपि चरेद्धर्मं, सर्वसिद्धिप्रदायकम् ।
यत्प्रभावेण वन्द्येत, सर्वलोकोपकारकः ॥ ४७६ ॥

दुःखश्रेणिं समापन्नो–धर्माराधनमिच्छति ।
स नरो निर्मलस्वान्तो–ऽचिरेण भजते सुखम् ॥ ४७७ ॥

दुःखपङ्कनिमग्नोऽपि, धर्मालम्बनमाश्रितः ।
अञ्जसाऽऽपत्तिमुत्सृज्य, प्रयात्येव परं पदम् ॥ ४७८ ॥

दानेनोच्चपदप्राप्तिः, संग्रहेणाधमा गतिः ।
उच्चस्थानं पयोदानां, पयोधीनामधः पुनः ॥ ४७९ ॥

दानेन स्वर्गमाप्नोति, दानमेवोत्तमः सुहृत् ।
दारिद्र्यनाशकं दानं, तस्माद्दानपरो भवेत् ॥ ४८० ॥

दानासक्तो महात्यागी, कर्णोऽभूद्भूमिवल्लभः ।
प्रतिज्ञातार्थरक्षायां, साधवः सुदृढाशयाः ॥ ४८१ ॥

दानमन्त्रप्रभावेण, भवन्ति वशवर्त्तिनः ।
देहिनो दक्षताशून्याः, किमसाध्यं महात्मनाम् ॥४८२॥

कालेन क्षीयते पुण्यं, संचितं विधियोगतः ।
इतिध्यात्वा सदा दानं, विधातव्यं मुमुक्षुभिः ॥४८३॥
भर्तुकामः सदा योग्याऽयोग्यभेदविमूढधीः ।
न जानाति हितं स्वस्य, परद्रोहपरायणः ॥ ४८४ ॥
इन्द्रियार्थरता लोके, परमार्थपराङ्मुखाः ।
इहाऽपि दुःखिताः सत्त्वाः, परत्र क्लेशसेविनः ॥४८५॥
मन्मथस्य वशं यातः, को न मग्नोऽतिसङ्कटे ।
स्ववशं कपिसैन्यं हि, क्षीराब्धि तीर्णवत्क्षणात् ॥४८६॥
आत्मवैभवसंपन्ना-स्तारयन्त्युचिताञ्जनान् ।
अश्मप्रवहणप्राया-आत्मतत्त्व विवर्जिताः ॥ ४८६ ॥
सेव्यतामक्षयज्ञान-सेवधिः सद्गुरुः सदा ।
अज्ञानोपहतस्याशु, संगतिः कुगतिप्रदा ॥ ४८७ ॥
कुगतिः सुगतिश्चैव, कर्मराशि समुद्भवा ।
तस्मात्सत्कर्मताशस्या, विकर्म परिवर्जयेत् ॥ ४८८ ॥
सत्कर्मवर्मितो जन्तु--रभेद्योऽरिकदम्बकैः ।
सुरक्षितो यथा मंत्रो–दीर्घकाले न भिद्यते ॥ ४८९ ॥
सूर्याचन्द्रमसौ लोके, प्रकाशेते दिवानिशम् ।
राहुणा बाधितौ नैव सज्जना हि निरादाराः॥ ४९०॥

गुणैर्गौरवतां याति, जनो निर्मलमानसः ।
प्रशस्तान्वयजातोऽपि, निर्गुणो लघुताऽऽस्पदम् ॥४९१॥

सन्तोषान्नपरं सौख्यं, ध्यानान्नास्त्यन्यतारकः ।
क्रोधान्नास्तिपरः शत्रु-र्लोभान्नान्यः पराभवः॥ ४९२ ॥

प्रमादान्नपरो द्रोही, दारिद्र्यान्नान्यदुःखदः ।
उद्यमान्नपरो बन्धुः, क्षुधातुल्या न वेदना ॥ ४९३ ॥

चिन्तया क्षीयते ज्ञानं, ज्ञाने नष्टे च विस्मृतिः ।
विस्मृतौ हि कुतः स्थैर्यं, चेतसो विबुधप्रिय ! ॥४९४॥

शीलमेव परं स्त्रीणां, संमतं हि विभूषणम् ।
इतरच्छारभूतं त-द्रत्नकाञ्चननिर्मितम् ॥ ४९५ ॥

निन्दितं जीवनं यस्य, विधुरं किमतः परम् ।
विदिताऽध्वप्रयाणं हि, सज्जनानां प्रियङ्करम् ॥४९६॥

गिरा मधुरया जिह्वा, रसाऽऽस्वादवती सदा ।
पीडनेन मिथोऽप्रीत्या, दन्तास्तु श्रमवेदिनः ॥४९७॥

दानदक्षतया हस्तो-दक्षिणः पूज्यताऽऽस्पदम् ।
वामस्त्वशुचिकार्येण, न तत्साम्यमुपागमत् ॥४९८॥

रसना नम्रतावित्ता, मधुरं रसमर्हति ।
अनम्रा द्विरदश्रेणी, सदैव श्रमवेदिनी ॥ ४९९ ॥

सर्वाण्यङ्गानि पूज्यानि, निजौचित्येन देहिनाम् ।
क्रमावेव प्रयाणेतु, शक्तिमन्तौ विशेषतः ॥ ५०० ॥

बाह्यभावरताः केचि-दाचरन्ति जनोदितम् ।
तत्त्ववेदनमद्राक्षी-त्कश्चिदेव नरोत्तमः ॥ ५०१ ॥

पञ्चशतीश्लोकानां, कण्ठगताराजते येषाम् ।
तेमुक्ताभरणा अपि, विभान्ति विद्वत्समाजेषु ॥५०२॥

॥ इति सुभाषितमुक्तावलि संपूर्णा ॥



# ગહુંલી.

( અલિ ? સાહેલી જંગમ તીરથ જોવા ઉભી રેને ? એ દેશી. )

સજનિ ? મ્હારી ગુરૂદર્શન કરવાને વેગે આવો,
અતિ આનન્દે ગુરૂ વન્દી ભવભવનાં પાપ પખાળો.
ગુરૂ શાન્ત સ્વભાવી સુખદાતા, ગુરૂ જ્ઞાન ગુણે ત્રિભુવન ત્રાતા,
ગુરૂ માતા પિતા ને વળી ભ્રાતા—સજનિ મ્હારી૦
ગુરૂ નિજ સ્વભાવે સદા રમતા, ગુરૂ વિશ્વવિભાવ દશા વમતા,
ગુરૂ નિશદિન ઇન્દ્રિયગણુ દમતા—સજનિ મ્હારી૦
ગુરૂ ષડ્દર્શનના છે જ્ઞાતા, વીરવાણી પ્રેમ સહિત પાતા,
રહે પ્રભુપદમાં રાતામાતા—સજનિ મ્હારી૦
ગુરૂમુખ દિવાકર રાજે છે, જોઇ મિથ્યામતિ અતિ લાજે છે,
છબી અનોપમ ગુરૂની છાજે છે—સજનિ મ્હારી૦
ગુરૂ ઇર્યા સમિતિ મન ધરતા, પૃથ્વીતળને પાવન કરતા,
ભવિમન સંશયને પરિહરતા—સજનિ મ્હારી૦
ગુરૂ ભાષા દોષ દૂરે કરતા, અમૃતસમ વાણી ઉચરતા,
જેનું પાન કરી ભવિજન તરતા—સજનિ મ્હારી૦
ગુરૂ આહાર એંડે દોષો ટાળી, માયા મમતા લાલચ બાળી,
ભવ્ય નયન ઠરે ગુરૂને ભાળી—સજનિ મ્હારી૦
ગુરૂ કામ કષાય તણા ત્યાગી, ગુરૂ અનુભવરસના છે રાગી,
ભીતિ ભવભ્રમણ તણી ભાગી—સજનિ મ્હારી૦

ગુરૂ ભાવટ ભવની ભાંજે છે, દીન હીન દેખી દિલ દાઝે છે,
ગુરૂમહિમા જગમાં ગાજે છે—સજનિ મ્હારી૦
ગુરૂ અનિત્ય ભાવના ભાવે છે, વીતરાગ તણા ગુણ ગાવે છે,
દર્શન કરતાં દુઃખ જાવે છે—સજનિ મ્હારી૦
ગુરૂ નિર્મળ ધ્યાન સદા ધરતા, લટપટ ખટપટ દૂરે કરતા,
ઝટપટ શિવ સુન્દરીને વરતા—સજનિ મ્હારી૦
ગુરૂ ચરણકમળ વન્દન કરીએ, વન્દીભવસાગરને તરીએ,
પછી અજીત અમરપદને વરીએ—સજનિ મ્હારી૦

---

# ગહુંલી.

( સજનિ ? મ્હારી પાર્શ્વ જીનેશ્વર પૂજોરે—એ દેશી. )

સજનિ ? મ્હારી વીર વાણી હિતકારીરે,
સજનિ ? મ્હારી પાપ પડળ હરનારીરે.
,, કર્મકટક સહુ કાપેરે, ,, અનોપમ આનન્દ આપેરે.
,, મેઘધ્વનિ પેરે ગાજેરે, ,, ગુણ પાંત્રીશ કરી છાજેરે.
,, દેવ દેવી નર નારીરે, ,, ભાષા તે સમજે સારીરે.
,, ચાર નિક્ષેપા સસભંગીરે, ,, નય સાત છે બહુ રંગીરે.
,, ઉત્સર્ગ ને અપવાદરે, ,, ધ્રુવ વ્યય ને ઉત્પાદરે.
,, દ્રવ્ય ક્ષેત્રને કાલ ભાવરે, ,, ભવજળ તરવાને નાવરે.
,, જીવાદિ નવતત્ત્વ જેમાંરે, ,, ષડ્દ્રવ્ય છે વળી એમાંરે.

,, હેય જ્ઞેય ને ઉપાદેયરે, ,, ભાવ ભર્યા એવા કેયરે.
,, સાંભળીએ ધરી ધ્યાનરે, ,, પામીએ જેથી રૂડુ જ્ઞાનરે.
,, વીર આણા દિલ ધારોરે, ,, થાય સફલ અવતારોરે.
,, એ વાણી મોતીડે વધાવોરે ,, અજીત અમરપદ પાવોરે.

## श्री पंचासरापार्श्वनाथ स्तवन.

( રાગ માઢ. )

મ્હારા પાર્શ્વ પંચાસરા નાથ હો ?
તારો પ્રેમ ધરી પરમેશ ?
કેશર ઘોળી કંકાવટી, ને ફુલડાં ભરેલી થાળ,
પાર્શ્વજી ? તુજને પૂજશું, પ્યારા પ્રભુજી દેવદયાળ–મ્હારા૦
કંચન કેરી કટોરીઓ ને, મણિ મુક્તાફળમાળ,
રત્નોની આંગી અમોલ રચું, જેમાં ફુલડાં રાતાં રસાળ–મ્હારા૦
ધૂપ દીપ નૈવેદ્ય ફળાદિક, પૂજા કરૂં પુન્ય કાજ,
ગાયન આપ ગુણોનાં ગાવું, મેળવી સંગીત સાજ–મ્હારા૦
તારક ત્રણ ભુવનના સ્વામિ, ધારક ધર્મના નાથ,
વારક વિષય કષાયના વિભુ, હેતેથી ઝાલો હાથ–મ્હારા૦
વિનયવાન વનરાજ નૃપાલે, શીલગુણ સૂરિની પાસ,
પુર પંચાસર માંહી સ્થપાવી, મૂર્તિ રસીલી ખાસ–મ્હારા૦
જાદવસેનાની જરા નિવારીને, બળતો બચાવ્યો નાગ,
તેમ અમોને અજીત પદ આપો, તો થઇએ મહા ભાગ્ય–મ્હારા૦

# आदिजिन स्तवन.

( મહેતાજીરે શું મહીમૂલ બતાવું—એ રાગ. )

આદીશ્વરે જીનવર જગ જયકારી, લેજો વંદના મ્હારી સ્વીકારી—ટેક.

સુખકારીરે શુદ્ધ સ્વરૂપના ધારી, જય સુખકર જગ ઉપગારી.
નાથ નગરી અયોધ્યાના રાયારે, માતા મરૂદેવીના જાયારે,
પિતા નાભિરાય કહ્યાયારે, પ્રાણેશ્વરરે પરણ્યા સુનંદા પ્યારી—લેજો૦

પ્રભુ તમેછો પ્રથમ નરિન્દારે, મુનિગણમાં પ્રથમ મુનિન્દારે,
જીનપતિમાં આદિજીનન્દારે, મનમોહનરે મૂર્તિમનોહર તારી—લેજો૦

પૂર્વ લાખ ત્યાશી ગૃહેવસીયારે, પછી સંયમના થયા રસીયારે,
ભાવે ભાવશત્રુઓને કસીયારે,જગજીવનરે કેવળ લક્ષ્મીનાધારી—લેજો૦

તાર્યો પુત્રોને અનુભવ આપીરે, ક્રૂર જડતા જગતની કાપીરે,
જેથી કીર્તિ અવિચળ વ્યાપીરે,દુઃખહારીરે માતાને પહેલાં તારી—લેજો૦

સ્વામિ સાહ્ય સેવકને કરજોરે, ઉર અરજી અમારી ધરજોરે,
ભવોભવનાં પાતક હરજોરે, જેથી પામીએરે અજીત અમર શિવ-
નારી—લેજો૦

# પદ

( મેરી અખીયાંમે રામરસ છાય ગયોરે-એ દેશી. )

મેરે પ્રેમીડે પ્રેમરસ પાય ગયોરે, (૨)
પાય ગયોરે, પીલાય ગયોરે, મેરે પ્રેમીડા પ્રેમરસ-ટેક.

મોહિની સુરત સુરત સુખકારી, (૨)
નેહ નજર કો લગાય ગયોરે-મેરે પ્રેમીડા૦

યમ નિયમ આસન ધરી બાણુ, (૨)
કેવળ કુંભકકો કરાય ગયોરે-મેરે પ્રેમીડા૦

ઇડા પિંગલા સુષુમણા સાધી, (૨)
ખિડકી પશ્ચિમકી ખુલાય ગયોરે-મેરે પ્રેમીડા૦

ગગન મંડળપર આપ બિરાજી, (૨)
નાદ અનહદ કો સુનાય ગયોરે-મેરે પ્રેમીડા૦

દુગ્ધા દૂર ગઇ તનમનકી (૨)
અનુભવ અંગે જગાય ગયોરે-મેરે પ્રેમીડા૦

ભાન ભૂલાવી ભવ ભ્રમણાનું, (૨)
આપ સ્વરૂપ બનાય ગયોરે-મેરે પ્રેમીડા૦

અજીત અમર પદ પ્રેમે બતાવી (૨)
પુદ્ગલ પ્યાર છુડાય ગયોરે-મેરે પ્રેમીડા૦

